॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

१८४

# रसगङ्गाधर-सारः

## ( रसे सारश्चमत्कारः )

( प्रश्नोत्तरात्मकः )



लेखक एवं सम्पादक—

**डॉ० नरेश झा**

साहित्याचार्य, साहित्यरत्न, काव्यतीर्थ, विद्यावारिधि

प्राप्तावकाश प्रधानाचार्य

आदर्श रानी चन्द्रावती श्यामा महाविद्यालय, वाराणसी




चौखम्बा सुरभारती प्रकाशन

वाराणसी

# परीक्षोपयोगी प्रश्नोत्तरात्मक पुस्तकें

## ( संस्कृत भाषा में )

१ अभिधावृत्तिमातृका-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी १२
२ अरस्तुकाव्यशास्त्र-सोपानम् । आचार्य शिवप्रसाद द्विवेदी १५
३ अलङ्कारशास्त्रस्येतिहासः । परमेश्वरदीन पाण्डेय १२
४ उत्तररामचरितादर्श । डॉ॰ रमाशंकर मिश्र २५-
५ औचित्यविचारचर्चा-मञ्जरी । डॉ॰ नरेश झा १२-
६ कर्पूरमंजरी-दीपिका । गौरीनाथ मिश्र 'भास्कर' १०-
७ कादम्बरी-कला-प्रकाशः । डॉ॰ नरेश झा ३०-
८ कादम्बरी प्रश्नोत्तरी । डॉ॰ शिवप्रसाद द्विवेदी ३०-
८ कादम्बरी-सोपानम् । शिवप्रसाद द्विवेदी ३०-
९ काव्यदीपिका-रहस्यम् । गौरीनाथ मिश्र 'भास्कर' १५-
१० काव्यप्रकाश-रहस्यम् । श्रीरामजी लाल शर्मा ३०-
११ काव्यमीमांसा-दीपिका । वेदव्यास शुक्ल ( १-५ अध्याय ) १५-
१२ काव्यशास्त्रस्येतिहास-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी २०-
१३ काव्यादर्श-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी १०-
१४ काव्यालङ्कारसूत्रवृत्तेः-आलोकः । ( तृतीयाधिकरण प्रश्नोत्तरी ) । डॉ॰ नरेश झा ७-
१५ काशिका-रहस्यम् । १-२ अध्याय । श्रीअशोककुमार गौड़ १०-
१६ किरातार्जुनीय-रहस्यम् । डॉ॰ कृष्णदेव प्रसाद । १-२ सर्ग, १०-००, ३-६ सर्ग १५-
१७ कुमारसम्भव-रहस्यम् । श्री रामप्रसाद त्रिपाठी । १-२ सर्ग १२-
१८ कुवलयानन्दालोकः । डॉ॰ नरेश झा २५-
१९ चन्द्रकलानाटिका-रहस्यम् । परमेश्वरदीन पाण्डेय १५-
२० चन्द्रालोक-रहस्यम् । मानवल्ली तथा बेताल ३०-०
२१ चम्पूरामायण सोपान । डॉ॰ शिवप्रसाद द्विवेदी १५-
२२ चारुदत्त-रहस्यम् । डॉ॰ नरेश झा १०-
२३ चित्रमीमांसा-प्रकाशः । डॉ॰ नरेश झा १५-
२४ छन्दोमञ्जरी-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी ७
२५ जातकमाला-दीपिका । आचार्य रामचन्द्र मिश्र १०
२६ तर्कभाषा-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी १०
२७ तर्कसंग्रह-रहस्यम् । श्रीकीर्त्यानन्द झा १०
२८ दशकुमारचरित-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी १२
२९ दशरूपकतत्त्वदर्शन-दीपिका । श्रीमनोजकुमार द्विवेदी १५
३० दशरूपक-रहस्यम् । डॉ॰ त्रिलोकीनाथ द्विवेदी १
३१ ध्वनिविरोध्याचार्याणां सिद्धान्ताः । डॉ॰ शिवप्रसाद द्विवेदी १
३२ ध्वन्यालोक-प्रकाशिका । श्री राजेन्द्रप्रसाद कोठ्यारी ३
३३ नलचम्पू-रहस्यम् । पं॰ परमेश्वरदीन पाण्डेय १
३४ नाट्यशास्त्र-प्रदीप । डॉ॰ नरेश झा । १-७ अध्याय

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला
१८४

# रसगङ्गाधर-सारः

## ( रसे सारश्चमत्कारः )

( प्रश्नोत्तरात्मकः )

लेखक एवं सम्पादक—
डॉ० नरेश झा
साहित्याचार्य, साहित्यरत्न, काव्यतीर्थ, विद्यावारिधि
प्राप्तावकाश प्रधानाचार्य
आदर्श रानी चन्द्रावती श्यामा महाविद्यालय, वाराणसी



चौखम्बा सुरभारती प्रकाशन
वाराणसी

प्रकाशक

**चौखम्बा सुरभारती प्रकाशन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : ३३३४३१





षष्ठ संस्करण १९९९

मूल्य २५-००

अन्य प्राप्तिस्थान

**चौखम्बा संस्कृत प्रतिष्ठान**

३८ यू. ए., बंगलो रोड, जवाहरनगर

पो० बा० नं० २११३

दिल्ली ११०००७

दूरभाष : ३९५६३९१



*

प्रमुख वितरक

**चौखम्बा विद्याभवन**

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ३२०४०४

मुद्रक

**श्रीजी मुद्रणालय**

वाराणसी

# प्रस्तावना

## ( अथातो रस-सारजिज्ञासा )

यद्यप्यनवद्यविद्या-विद्योतितान्तःकरणाः कवीश्वराः सहृदयाः साहित्यिकाश्चालङ्कारशास्त्रमाहात्म्यं सम्यक्तया विदन्ति। किन्त्वाधुनिकानां मादृशानामल्पमेधसां विदुषामद्यापि चिन्तनीयमेवास्ति। तत्रापि छात्राणां का कथा? ऐतिहासिकविदुषा श्रीमता कविराजेन राजशेखरेण स्वस्य 'काव्यमीमांसा' नामकस्य ग्रन्थस्य शास्त्रनिर्देशाध्याये—यस्यालङ्कारशास्त्रस्य चर्चा विहिताऽस्ति, तत्किमिदं शास्त्रम्? का परिभाषा तच्छास्त्रस्य? एतत्सर्वं सर्वप्रथमं विचारणीयमस्ति। अस्मिन् विषये राजशेखर एव प्रमाणम्, तेन दार्ढ्येन प्रतिपादितं यत् 'सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम्, अर्थात्—पञ्चदश विद्यास्थानं काव्यपदार्थस्य शासनं करोति। अत्रायमाशयः—काव्यरूपलक्ष्यस्य लक्षणं लक्षणानि वा यस्मिन् शास्त्रे स्युः, तन्नामालङ्कारशास्त्रमस्ति, अथवा सुस्पष्टीकरणायैतत् कथनीयं स्याद्यत्—तासां विविधानामालोचनानां संज्ञाऽलङ्कारशास्त्रमस्ति, याभिः काव्यस्य सूक्ष्मातिसूक्ष्माः गतिविधयः, सौष्ठवं किं वाऽसौष्ठवं ज्ञातं भवेत्। अलङ्कारशास्त्रमेव साहित्यशास्त्रं कथयन्ति विद्वांसः। विद्वन्मूर्द्धन्येन राजशेखरेणापि 'शब्दार्थयोर्यावत् सहभावेन विद्यासाहित्यविद्या' इति प्रतिपाद्य साहित्यशब्दस्यार्थः 'काव्यमि'ति स्वीकृतम्।

इत्थम्भूते महिमामण्डितेऽलङ्कारशास्त्रे पण्डितराजमहोदयानां सर्वश्रेष्ठः ग्रन्थोऽस्ति रसगङ्गाधरः। रसगङ्गां धारकोऽसौ ग्रन्थः। इत्येव नहि—अयमेको ध्वन्यालोक-काव्यप्रकाशयोरिव महत्त्वपूर्णः प्रामाणिको ग्रन्थोऽस्ति। अस्य ग्रन्थस्यैकं महद् वैशिष्ट्यं विद्यते यदत्र ग्रन्थकारेण पण्डितराजेन यान्युदाहरणानि प्रयुक्तानि तानि स्वनिर्मितान्येव सन्ति। सत्यमेव कथितं तेन रसगङ्गाधरे—

'निर्माय नूतनमुदाहरणस्वरूपं काव्यं मयात्र निहितं न परस्य किञ्चित्।
किं सेव्यते सुमनसां मनसापि गन्धः कस्तूरिकाजननशक्तिभृता मृगेण॥'

पण्डितराजाः केवलमालङ्कारिका एव नासन्, अपि तु उत्कृष्टकवयोऽप्यासन्। रसगङ्गाधरस्यापूर्णोऽपि ग्रन्थोऽयं नितान्तं महत्त्वपूर्णः। अस्मिन् ग्रन्थे

केवलमाननद्वयमुपलभ्यते । तत्र प्रथमानने काव्यस्य लक्षणं 'रमणीयार्थप्रतिपादकः शब्दः' कृतम् । अस्य लक्षणस्य पुष्टयै—एभिः प्राचीनालङ्कारिकाणां ( नां ) काव्यलक्षणस्य पूर्णा समीक्षा कृता । प्रतिभैव काव्यस्य मुख्यं कारणमस्तीति निश्चित्य, काव्यस्य चत्वारो भेदाः परिकल्पिताः । ते च यथा—( १ ) उत्तमोत्तमम्, ( २ ) उत्तमम्, ( ३ ) मध्यमम्, ( ४ ) अधमञ्चेति । तदनु रसस्य साङ्गोपाङ्गं विवेचनं ग्रन्थकारेण कृतम् । द्वितीयाननस्य प्रारम्भे—ध्वनिप्रभेदानां विवेचनां विधाय, अभिधालक्षणयोश्च समीक्षा वर्त्तते ।

तत्पश्चाच्चालङ्काराणां निरूपणमस्ति । अत्र केवलं सप्तत्यलङ्काराणां वर्णनं विद्यते । उत्तरालङ्कारवर्णनेन ग्रन्थोऽयं समाप्तिमेति ।

**टीका-सम्पदः**—यद्यप्यलङ्कारशास्त्रस्य चरम-चूडान्तभूतोऽयं ग्रन्थराट् । अवच्छेदकावच्छिन्नसमन्विते क्लिष्टेऽस्मिन् ग्रन्थे टीकाकरणं दुःशक्यमेवासीदस्ति च । अत एवाद्यावधि अङ्गुलिगण्या एव विद्वांसः टीकामटीटिकन्, ग्रन्थस्य जटिलत्वात् । तासु टीकासु विख्यातवैयाकरणस्य नागेशभट्टस्य—'गुरुमर्मप्रकाशिका' अन्वर्थनाम्नी टीका प्रकाशिताऽस्ति । श्रूयते रसगङ्गाधरस्यापरा टीका विषमपदी नाम्नी याऽधुनाप्यप्रकाशितैवास्ति । श्रीमतां कविवराणां पण्डितवरेण्यानां मथुरानाथभट्टपादानां सरलानाम्नी लघ्वी टीकाऽपि चर्चिताऽस्ति । एवमेव काशी-नागरी-प्रचारिणीसभातः पण्डितश्रीपुरुषोत्तमशास्त्री-चतुर्वेदिनां 'हिन्दी-अनुवाद'रूपेण प्रकाशिताऽस्ति । तदनु महता सम्भारेण वाराणसेयचौखम्बाविद्याभवनात् वैक्रमसंवत्सरस्य प्रायः प्रारम्भे एव मैथिलश्रोत्रियकविशेखराणां विद्वन्मूर्द्धन्यानां पण्डितश्रीबदरीनाथझामहोदयानां 'चन्द्रिका' नाम्न्यद्भुता टीका प्रकाशिता, अस्याः महत्त्वपूर्णायाष्टीकायाः हिन्दीव्याख्याकाराः सन्ति प्राप्तावकाशप्राचार्याः सहृदयसाहित्यिकाः पण्डितमदनमोहनझामहोदयाः । इयमेव टीका मम लेखने प्राणभूता । अतस्तान् प्रति कृतज्ञभावेन विनतोऽस्मि । अन्यच्च—काशीहिन्दूविश्वविद्यालयात् आचार्य पं० मधुसूदनशास्त्रिणो रसगङ्गाधर-व्याख्या प्रकाशिता अस्ति । अपरञ्च सम्प्रति सम्पूर्णानन्दसंस्कृतविश्वविद्यालयात् पण्डितप्रवराणां श्रीमतां केदारनाथओझामहोदयानां 'रसचन्द्रिका' नाम्नी व्याख्या प्रकाशिताऽस्ति । महत्त्वपूर्णोऽयं ग्रन्थः प्रायः सर्वेषु संस्कृतविश्वविद्यालयेष्वन्येषु विश्वविद्यालयेषु चोच्चकक्षायां पाठ्यग्रन्थरूपेण

निर्धारितोऽस्ति। छात्राणां काठिन्यमवलोक्य सारसङ्ग्रहोऽयं मया लिखितः। आशान्वितोऽस्मि यदनेन कृतकार्येण परीक्षाब्धितितीर्षूणां छात्राणां काठिन्यं दूरी भविष्यति।

पर्यन्ते—पद्मविभूषणपदाङ्कितानां विश्वविख्यातवैदुष्याणामस्मद्गुरुवराणामाचार्यबलदेव-उपाध्यायमहोदयानां स्मरणं नमनं प्रणमनञ्चेत्यावश्यकमिति मत्वा तदीयं पादपद्मयोः प्रणतोऽस्मि, येषां 'संस्कृतशास्त्राणामितिहासम'धीत्योपकृतोऽस्मि।

सहैवाविस्मरणीयमेतद्यत्—चौखम्बा-सुरभारती-प्रकाशनाध्यक्षान् प्रत्याभारं बिभर्मि। यैस्सहकृतोऽहमस्मिन् दुरूहे महत्त्वपूर्णे कार्ये प्रवृत्तः। अवसाने तान् पण्डितलेखकान् प्रति कृतज्ञताभावेन विनतोऽस्मि, येषामुपकारं बिभर्मि। अन्ते चेदं निवेदनम्—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति पण्डिताः॥

मातृ-नवमी सं० २०४७ वै० — विदुषां विधेयः
दिनांक १३।९।९० ई० — डॉ० नरेश झा
वाराणसी—

# प्रश्नानुक्रमणिका

## प्रथमाननस्य

२४. रसानां विरोधाविरोधौ चिन्तयत ।

२५. अनौचित्यादृते नान्यद् रसभङ्गस्य कारणमिति कुत्रोपन्यस्तं तत्र चास्य साफल्यमिति विवेचनीयम् ।

२६. माधुर्यौजःप्रसादानां त्रयाणां गुणानां रसमात्रधर्मत्वं जगन्नाथदर्शित-दिशा साधयत ।

२७. दशसु शब्दगुणेषु कयोश्चिद् द्वयोर्लक्षणं सपदकृत्यं दर्शयत ।

२८. ( क ) भावत्वं परिष्करणीयम् ।

( ख ) अतिव्याप्त्यादिदोषप्रदर्शनपूर्वकं भावध्वनिं निरूप्य कथं न रसध्वनावन्तर्भावः, कथं वा भावानां सङ्ख्यानियमः इति ? समाधीयताम् ।

( ग ) परमतनिरसनपूर्वकं पण्डितराजाभिमतभावध्वनिः विशदं विवेचनीयः ।

( घ ) किं नाम भावत्वमिति विशदं विविच्यताम् ।

२९. भावलक्षणं भावाभिव्यक्तिप्रकारश्च लिखत ।

३०. व्यभिचारिभावानां केषाञ्चित् पञ्चानां लक्षणोदाहरणे वर्णयत ।

३१. सोदाहरणं स्मृतिभावमुद्भाव्य तस्य तदादिपदवाच्यत्वेऽपि व्यक्ति-वेद्यत्वं साध्यताम् ।

३२. 'तदादेर्बुद्धिप्रकारावच्छिन्ने शक्तिरिति नये बुद्धेः शक्यतावच्छेदकानुगम-कतया न वाच्यता संस्पर्शः । बुद्धिस्थत्वं शक्यतावच्छेदकमिति नयेऽपि स्मृतित्वेन स्मृतेर्व्यक्तिवेद्यतैव' इत्यनुच्छेदः सप्रसङ्गं व्याख्येयः ।

३३. भावसन्धि-भावशबलतयोरेकतरं सोदाहरणं विवृणुत ।

३४. भावशबलत्वलक्षणमुपन्यस्य तेषूपमर्दोपमर्दकभावः समुचितो न वेति प्रकाश्यताम् ।

३५. अधोलिखितेषु द्वावनुच्छेदौ सावतरणं व्याख्येयौ—

( क ) सोऽयं निगदितः सर्वोऽपि रसादिलक्षणो व्यङ्ग्यप्रपञ्चः स्फुटः प्रकरणे झटिति प्रतीतेषु विभावानुभावव्यभिचारिषु सहृदयतमेन प्रमात्रा सूक्ष्मेणैव समयेन प्रतीयत इति हेतु-हेतुमतोः पौर्वापर्यक्रमस्या-लक्षणादालक्ष्यक्रमो व्यपदिश्यते ।

( ख ) एवमेतेषु गुणेषु रसमात्रधर्मेषु व्यवसितेषु मधुरा रचना, ओजस्वी बन्धः, इत्यादयो व्यवहाराः आकारोऽस्य शूरः इत्यादि व्यवहारवदौपचारिकाः इति मम्मटभट्टादयः ।

( ग ) यत्तु चित्रमीमांसायां 'वागर्थाविव सम्पृक्तौ' इत्यत्र रसध्वनिः

॥ श्रीः ॥

# रसगङ्गाधर-सारः

## ( रसे सारश्चमत्कारः )

### मङ्गलाचरणम्

( ग्रन्थ-प्रशस्तिश्च )

स्मृतापि तरुणातपं करुणया हरन्ती नृणा-
मभङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम् ।
कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी,
मदीयमतिचुम्बिनी भवतु काऽपि कादम्बिनी ॥ १ ॥
प्रणम्य परमात्मानं वाग्देवीं शारदां तथा ।
प्रस्तौमि छात्रबोधाय कुञ्चिकां सारसंयुताम् ॥ २ ॥
पण्डितेन्द्रो जगन्नाथो मान्योऽयं विदुषां गणे ।
रसगङ्गाधरस्तस्य विख्यातो भुवि मण्डले ॥ ३ ॥
नव्यन्यायस्य शैल्यां हि ग्रन्थोऽयं बुधसम्मतः ।
धीमतामपि दुर्बोधो कथयन्ति सुधीवराः ॥ ४ ॥
अयं पण्डितराजो हि सर्वविद्यानिधानधीः ।
यथा शास्त्रे तथा काव्ये सर्वत्र समबुद्धिमान् ॥ ५ ॥
शब्दार्थयुगलं काव्यं मम्मटेनाभिभाषितम् ।
शब्द एव हि काव्यात्मा अर्थश्चेद्रमणीयकः ॥ ६ ॥
गुणालङ्कारयोः काव्ये स्थितिः स्यादिति चर्चितम् ।
गङ्गाधरे न चैवं हि वैशिष्ट्यं चात्र विद्यते ॥ ७ ॥
शक्तिर्निपुणताभ्यासाः काव्ये यत्र प्रयोजकाः ।
प्रतिभैव श्रुताभ्यासकारणं कवितां प्रति ॥ ८ ॥

नायकादीनान्तु भेदेऽपि जगन्नाथः स्वतन्त्रधीः ।
सर्वतन्त्रस्वतन्त्रोऽसौ विख्यातो भुवि राजते ॥ ९ ॥
तस्माच्छात्रहितार्थाय परीक्षाब्धेस्तितीर्षवे ।
कृतोऽयं सरलोद्योगः देयात् सततमङ्गलम् ॥ १० ॥

( १ ) प्रश्नः—रसगङ्गाधरकारस्य पण्डितराज-जगन्नाथस्य सङ्क्षेपतमः परिचयो देयः ।

**उत्तरम्**—प्रथितोऽस्ति संस्कृतसाहित्यजगति यत्—पण्डितराजो जगन्नाथः ( रसगङ्गाधर-प्रणेता ) अलङ्कारशास्त्रस्येतिहासे सर्वतोऽधिकः प्रसिद्धोऽन्तिमश्च प्रौढः आलङ्कारिक आसीत् । इमे पण्डित-पण्डिताः तैलङ्गब्राह्मणाः आसन् एतेषां पितुर्नाम पेरुभट्टः, मातुश्च लक्ष्मीदेवी आसीत् । पण्डितराजा कुवलयानन्दप्रणेतुः स्वप्रतिस्पर्द्धिनोऽप्पय्यदीक्षितस्य समसामयिकाः आसन् । एतेषां पिता ( पेरुभट्टः ) वेदान्तस्य शिक्षा ज्ञानेन्द्रभिक्षोः सकाशात्, न्याय-वैशेषिकस्य महेन्द्रपण्डितात्, पूर्वमीमांसायाः खण्डदेवात् तथा च व्याकरणस्य शिक्षा शेषवीरेश्वरादधिगता । पण्डितराजेनैतेषां विषयाणामध्ययनं स्वपितु सकाशात्—स्वपितुः गुरोः शेषवीरेश्वराच्च कृतम् । तथा चोक्तं रसगङ्गाधरे—

'श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः,
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ।
देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं,
शेषाङ्कप्राप्तशेषामलभणितिरभूत् सर्वविद्याधरो यः ॥'

एतेषां सर्वविद्याधराणां जीवनविषयेऽनेकाः किंवदन्तयः श्रूयन्ते । दिल्लीश्वरेण शाहजहाँसम्राजा—अयं पण्डितराजोपाधिनाऽलङ्कृतः । इमे महानुभावा कतिपयदिवसपर्यन्तं 'शाहजहाँ'-सम्राजः ज्येष्ठं पुत्रं 'दाराशिकोहं' संस्कृत मध्यापितवन्तः । एतैः स्वकीये जगदाभरणकाव्ये दाराशिकोहस्य प्रशंसा कृता श्रूयते यदेतैः नवनीतकोमलाङ्ग्या कयापि यवन्या सह विवाहसम्बन्ध स्थापितः, अनेन दोषपूर्णकारणेन च समाजाद् बहिष्कृते सति—एभिः एकयाऽलौकिक्या घटनया स्वनिर्दोषभावः स्थापितः । इयं जनश्रुतिर्वर्तते यत्—स्वनिर्मितायाः गङ्गालहर्याः पाठकरणात् स्वयं गङ्गा—उपरिभागे वर्द्धतेस्म स्वयञ्च स्वाङ्के निधायास्य निर्दोषता साधितवती ।

भवेन्नाम—इयमुपर्युक्ता किंवदन्ती—अक्षरशः पूर्णा सत्या न स्यात्

परञ्चैतत् सत्यमस्ति यदेतैः स्वयौवनकालः दिल्ली-सम्राजः 'शाहजहाँ' इत्यस्य शैत्यपूर्णायां छत्रच्छायायां यापितः । साधूक्तमस्ति—

'दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः ।'

इत्येव नहि पण्डितेन्द्रैः स्वग्रन्थे दिल्लीश्वरस्य महती भूयसी च प्रशंसा कृता अवलोकयन्तु सुधीजनाः तद्वर्णनच्छटाम्—

'दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान् पूरयितुं समर्थः ।
अन्येन केनापि नृपेण दत्तं शाकाय वा स्यात् लवणाय वा स्यात् ॥'

स्वजीवनस्यावसानकाले इमे मथुरानिवासिनः आसन् । अपि च परम-वैष्णवाः एते । भगवतः विष्णौ स्तुतौ—एतेषां सरसानि पद्यानि पठित्वा कोऽप्यालोचकः एषामहैतुक्या भक्त्या प्रभावितो न भवेदिति न । परमाराध्या मुक्तिदायिनी काशी तु एषां जन्मभूमिस्तु न कर्मभूमिस्त्ववश्यमेवासीत्; इति सुनिश्चितम् ।

**समयः**—शाहजहाँ-सम्राजः दाराशिकोहस्य च समसामयिकत्वात् पण्डित-राजस्य समयः सम्यक्तया निश्चेतुं शक्यः । प्रचण्डपाण्डित्य-समन्विते रस-गङ्गाधरे स्वीये 'शाहजहाँ'-सम्राजः प्रशंसायां पद्यमेकं प्रदत्तमेभिः । तद्यथा—

'भूमीनाथ-शहाबुद्दीन-भवतस्तुल्यो गुणानां गणै-
रेतद्भूतभवप्रपञ्चविषये नास्तीति किं ब्रूमहे ।
धाता नूतनकारणैर्यदि पुनः सृष्टिं नवां भावये-
न्न स्यादेव तथापि तावकतुलालेशं दधानो नरः ॥'

अपि च दाराशिकोहस्य प्रशंसायामेषां जगदाभरणनामकं काव्यमेवास्ति । शाहजहाँ-सम्राजः परिषन्नायकस्य नवाब-आसफखाँ इत्यस्याश्रयेऽपि कति-चिद्दिनानि व्यतीतानि, आसफखाँ नायकस्यावसानः १६४१ ईसवीये कालेऽभूत् । तद्दुःखे दुःखितोऽयम् 'आसफविलास' नामकः ग्रन्थोऽलीलिखत् । अतः एतेषां कालः १७ सप्तदशशताब्द्याः मध्यभागः सिद्ध्यति ।

### पण्डितराजस्य चिरस्मरणीयाः ग्रन्थाः

संस्कृतसाहित्य-प्रौढलक्षणग्रन्थरचयितृभिः पण्डितराजैर्जगन्नाथैः अनेके काव्यग्रन्थाः विरचिताः । तेनैतेऽमराः सञ्जाताः । तेषु काव्यग्रन्थेषु भामिनी-विलासः, गङ्गालहरी, करुणालहरी, अमृतलहरी, आसफविलासः, जगदाभरणम्, प्राणाभरणम्, सुधालहरी, यमुनावर्णनचम्प्वादयो ग्रन्थाः सुप्रसिद्धाः सन्ति ।

**अपरञ्च**—अभिनववैयाकरणस्य 'भट्टोजिदीक्षित'विरचितस्य मनोरम ग्रन्थरत्नस्य खण्डनार्थैभिः 'मनोरमाकुचमर्दनः' नामको ग्रन्थोऽपि विरचितः किम्बहुनोक्तेन—एते सर्वविद्यानिधानधियः आसन्। अलमिति पर्यालोच पूर्वकपरिचयप्रदानेन।

( २ ) **प्रश्नः** ( क ) रसगङ्गाधरस्य मङ्गलपद्येऽलङ्काराणां साङ्क प्रदर्श्य पार्यन्तिकं व्यङ्ग्यं प्रकटयत। ( सं० सं० वि० वि० १९८९

( ख ) स्मृतापीति मङ्गलपद्ये सम्भावितानामलङ्काराणां स्थि प्रदर्श्य त्रिकस्य प्राधान्यमिति प्रदर्श्यताम्।

( ग ) रसगङ्गाधरस्य स्मृतापि इति मङ्गलपद्ये भावस्य अलङ्क राणां वा प्राधान्यमिति विचारयत।

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराज-जगन्नाथविरचितस्य साहित्यशा चूडान्न ग्रन्थस्य रसगङ्गाधरस्यादौ विघ्नविघाताय स्वेष्टदेवताप्रसादपूर्व निर्विघ्नग्रन्थसमाप्तये कृतं मङ्गलाचरणं 'स्मृतापि तरुणातपकरुणया हर नृणाम्' इत्यादि रसपूरितं विविधालङ्कारसमन्वितं विद्यते।

अस्मिन् मङ्गलपद्ये घनश्यामस्य भगवतः श्रीकृष्णस्य मङ्गलमय्याः मू वर्णनं रसकोविदेन महाकविना पण्डितराजेन जगन्नाथेन कृतमस्ति। तद्यथा— ( भगवतः श्रीकृष्णस्यानुपमा मूर्तिः ) स्मृतिमात्रविषयीभूताऽपि ( न तु दृष्ट स्पर्शविषयीभूतैव ) मानवानां ( न तु कस्याप्येकस्य जनस्य ) आधिदैवि आधिभौतिक-आध्यात्मिक-त्रिविधतापविशेषान् करुणार्द्रया दयया हरति, कि या ( मूर्त्तिः ) कदापि अभङ्गुरया शरीरप्रभया युक्तया विद्युन्मालया वे ताऽस्ति। ( न तु क्षणं चाकचिक्यसमन्वितया )। अपि च या कलि कन्यायाः यमुनायास्तटोपवर्त्तिनः वृन्दावनस्य सुरतरुं कदम्बमाश्रयन्ती ( वि साय ) तिष्ठति, एवम्भूता प्रसिद्धातिरिक्ता घनघटा ( घनश्यामसुन्द गोपिकावल्लभस्य श्रीकृष्णचन्द्रस्य मनोहारिणी मूर्त्तिः ) मम ( जगन्नाथस विमलबुद्धिचुम्बिनी भवत्विति।

साम्प्रतं प्रस्तुतविषयमनुसरामः। अत्रायमाशयः—या मेघमाला सुप्रसि ऽस्ति सा तु दृष्ट्वैव कस्याप्यनुतापं शमयति, तत्परिवर्त्तिनी विद्युत भङ्गुराऽस्ति। न च तस्या आलम्बनं यमुनातटवर्ती कदम्बतरुः, अचेतन तस्यां करुणायाः सम्भावनैव नास्ति। एभिः कारणैः कवेः विवक्षिता मेघमाल तु सा अपि तु अत्र कृष्णमूर्त्तिः एव सम्भवा। अमुं व्यतिरेकमेव स्पष्टीकर

न्थकर्त्रा 'कादम्बिनी'त्यस्य विशेषणं 'काऽपि' इति कथितम्। अस्मात्कारणा-स्मिन् पद्ये व्यतिरेकालङ्कारोऽस्ति। अपि चात्र सन्तापः, गोप्यः कृष्णमूर्तिश्च—त्यादयः ये उपमेयाः सन्ति, तेषां क्रमेण आतप-विद्युत्-कादम्बिनीरूपोपमानैः गिरणत्वादतिशयोक्त्यलङ्कारोऽपि विद्यते। अनयोर्द्वयोरलङ्कारयोः परस्पर-पेक्षत्वात् सङ्करनामकस्तृतीयोऽप्यलङ्कारो भवति।

अस्मिन् पद्ये पार्यन्तिकव्यङ्ग्यविषये चन्द्रिकाकारा आहुः—

'अपि कैमुतिकन्यायेन दर्शनादेरधिकतापापनोदकत्वम्, तापस्य तारुण्य-सहनीयत्वद्वारेण त्वरयाऽपनयनौचितीम्, करुणयेति तापोपशमनस्य, बुद्धि-वैकत्वसार्वत्रिकत्वे, शतृप्रत्ययोदाहरणस्य वर्तमानकालिकत्वेन स्पृहणीयतम-म्, नृणामिति बहुवचनं साकल्यमुखेनान्यतो व्यतिरेकम्, तनुत्विऽभङ्गुरता जातीयताम्, विद्युत्त्वेन गोपनितम्बिनीनां निगरणमद्वितीयसौन्दर्यसाम्राज्यम्, तैरित्येकद्वयादिव्यवच्छेदद्वारा प्रसिद्धवैजात्यम्, वलयितेति संयोगस्याक्षणि-त्वेन सुषमातिरेकम्, कालिन्दीकूलनिलिम्पपादपावलम्बिता स्वेतरव्यतिरेकम्, श्रीकृष्णमूर्त्तेः कादम्बिनीत्वाध्यवसानं सद्यः फलदानार्हताशोभोत्कर्षौ मतेरमूर्त्ततया, म्बनकर्मत्वासम्भवात् तच्चुम्बनं नियतविषयविषयिभावसम्बन्धम्, भवत्विति टलकारः प्रार्थनाम्, समस्तः सन्दर्भः कविसमवेतं श्रीकृष्णरतिभावं च नक्ति। अनेन प्रकारेणास्मिन् पद्ये यत्र यत्र पार्यन्तिकं व्यङ्ग्यं समुदेति त्सर्वमत्र निबद्धमस्तीति दिक्।

( ३ ) प्रश्नः—श्रीजगन्नाथकृतं काव्यलक्षणं सपदकृत्यं व्याख्येयम्।
( स० सं० वि० १९८२ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः वाग्देवतावतारस्याचार्य-पण्डितराजजगन्नाथ-रचितस्य रसगङ्गाधरस्यादावेव चर्चितोऽस्ति। तत्र काव्यलक्षणसूत्रावतारण-सङ्गे कथितमस्ति यत्—'तत्र कीर्तिपरमाह्लाद-गुरुराजदेवताप्रसादाद्यनेक-योजनकस्य काव्यस्य व्युत्पत्तेः कविसहृदययोरावश्यकतया गुणालङ्कारादि-निरूपणीये तस्मिन् विशेष्यताऽवच्छेदकं तदितरभेदबुद्धौ साधनं च तल्लक्षणं वन्निरूप्यते।'

अत्रायं विमर्शः—यत्तु आचार्यमम्मटेन काव्यप्रकाशे काव्यप्रयोजनं विदधता क्तं यत्—'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥'

एतत्सर्वं पण्डितराजस्योपर्युक्ते गद्येऽन्तर्भुक्तमस्ति । तथा हि—प्रथमेनादि पदेन व्यवहारज्ञान-कान्तासम्मितोपदेशयोरेवादानम्, कीर्ति-परनिर्वृत्यो कण्ठतः, धनप्राप्ते राजप्रसादजन्यत्वेन, प्रत्यवायधुतेश्च गुरुदेवताप्रसादसाध्यत्वे प्रतिपादनात् ।

अपि च—आचार्यविश्वनाथप्रतिपादितचतुर्वर्गादिप्राप्ति-काव्यप्रयोजनमप्यत्रा न्तर्भवितुमर्हति ।

अपरश्च—'सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥'

इत्यमुं सिद्धान्तं मनसि निधाय—ग्रन्थकारेण 'करोति कुतुकेन काव्यमी मांसाम्' इत्यादिभिः सत्काव्यनिरूपणार्थं काव्यमीमांसां कर्तुं प्रतिज्ञातम् । काव्य निरूपणञ्च काव्यविषयकज्ञानानुकूलशब्दप्रयोगः । एवञ्च काव्यज्ञानं गुणाल ङ्कारादिप्रकारकं काव्यविशेष्यकम् । तथा च 'काव्यं गुणादिमत्' इत्याकार प्रकृतोपयोगि, तत्र च ज्ञाने काव्यत्वरूपविशेष्यतावच्छेदकज्ञानं प्रथमावश्यक एवमेवान्यान्यपि तत्तत्पदार्थेषु भेदसिद्धिः, प्रवृत्तिनिवृत्त्युपयोगितादीनि कारणा सन्ति । एतत्सर्वं मनस्याधाय पण्डितराजो जगन्नाथः काव्यलक्षणं विलक्ष प्रस्तौति—

'रमणीयार्थप्रतिपादकः शब्दः काव्यम् ।'

अर्थात्—स्वप्रातिभज्ञानमूलकालौकिकचमत्कारकारणेन मनोहरस्यार्थ वाच्य-लक्ष्य-व्यङ्ग्यान्यतरस्य प्रतिपादकः समुद्भावकः शब्दः काव्यं काव्यप व्यवह्रियमाण इति यावत् । प्रकारान्तरेणेदमायातं यत्—रमणीयार्थप्रतिपादक सति शब्दत्वमिति निर्गलितलक्षणम् ।

अत्र लक्षणे दोषादिपरिहारो यथा—रमणीयस्य चमत्कृतानुरागाद्यर्थ व्यञ्जके कटाक्षनिक्षेपाद्यर्थेऽतिव्याप्तिं वारयितुं विशेष्यदलम् । रमणीय विशेषणञ्चाचमत्कारार्थबोधके 'घटमानय' इत्यादि वाक्येऽतिप्रसङ्गनिरा र्थमेव । अपरञ्च—रमणीयार्थनिरूपितस्य वाचकत्वस्य निवेशे तादृशार्थव्यञ्ज व्यञ्जकत्वस्य निवेशे च तथाविधार्थवाचके शब्देऽव्याप्तिं तिरयितुं तदु साधारणस्य प्रतिपादकत्वस्य प्रवेशः । रमणीयशब्दः प्रतिपादके व्याकरणे व्याप्तिं परिहर्तुं चार्थस्य प्रवेशोऽवधेयः ।

अतः सुस्पष्टरूपेणेदमायातं यत्—रमणीयाः = लोकोत्तरानन्दजनकभा विषयाः, ये = वाच्य-लक्ष्य-व्यङ्ग्यत्रिविधशब्दाः, तत्प्रतिपादकः = तद्बि

बोधजनकः शब्दः = सुबन्ततिङन्तनिष्पन्नरूपः काव्यमिति । रमणीयतायाः व्यवस्थितिमाधानाय तत्स्वरूपमाचष्टे—

'रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता ।'

**अत्रेयमवधारणा**—चकारः पूर्वोक्तवाक्यस्य प्रपूरकः । लोकोत्तरस्य लोकातिगस्यात एवालौकिकस्य, आह्लादस्य हृर्षातिरेकस्य, जनकं समुत्पादकं यज्ज्ञानं तद्गोचरता तन्निरूपित-तदुद्भासितविषयतारूपार्थनिष्ठा रमणीयतेत्यर्थः ।

साम्प्रतं लोकोत्तरत्वस्य किं स्वरूपमित्याह—

'लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः' इति ।

अत्रायमाशयो यत्—अत्रत्य लोकोत्तरत्वं सातिशयः निरतिशयो वा किमपि नहि घटत्व-पटत्वमिवानन्दे स्थितः एको जातिविशेषः । सहृदयानामनुभव एव प्रमाणम् । यथोक्तम् आचार्यविश्वनाथेन—सचेतसामनुभवः प्रमाणं तत्र केवलमिति ।

एतत्सर्वं प्रस्तुतेऽस्मिन् काव्यलक्षणनिष्कर्षरूपे यथा समाहितं तत्तथा—'इत्थं चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम्, यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकताऽवच्छेदकं तत्त्वं 'स्वविशिष्टजनकताऽवच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारवत्त्वमेव वा काव्यत्वमिति फलितम् ।

इत्थं सङ्क्षेपेण काव्यलक्षणस्य सपदकृत्यं व्याख्यानं प्रस्तुतमिति ।

( ४ ) **प्रश्नः**—'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति रसगङ्गाधरवाक्यं श्रीजगन्नाथदिशा परिष्कृत्यपदकृत्यञ्च प्रदर्श्य—'पुत्रस्ते जातः धनं ते दास्यामि' इत्यादि वाक्यानां काव्यत्वं निरस्यत ।

( सं० सं० वि० १९७५ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजविरचितस्य रसगङ्गाधरस्य प्रथमानने विरचितस्य ग्रन्थे मुख्यरूपेण प्रयोजनभूतस्य काव्यस्य लक्षणप्रसङ्गे समादृतोऽस्ति । तच्च यथा—

'रमणीयार्थप्रतिपादकः शब्दः काव्यम् ।'

इति काव्यलक्षणप्रसङ्गे रसगङ्गाधरवाक्यस्य तत्कर्तुः पण्डितराजजगन्नाथस्य परिष्कृतिः पदकृत्यञ्च यथा तदीयस्वरूपेणैव रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता । यज्ज्ञानेन लोकोत्तरानन्दः उपलब्धो भवेत्,

सोऽर्थः रमणीयोऽस्ति। साम्प्रतमेषा शङ्का जागर्ति यत् किं नाम लोकोत्तरत्वमिति जिज्ञासायां ग्रन्थकारः स्वयमेव प्रतिपादयति यत्—

'लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः। आह्लादगतः अतिशयानन्दसमन्वितः, चमत्कारत्वं विस्मयलक्षणचित्तविस्तारात्मकवृत्तिधर्मविशेषोऽपरः पर्यायो नामान्तरं यस्य तादृशः, तथा अनुभवः सहृदयसमवेतं प्रत्यक्षं चवर्णालक्षणं साक्षीप्रमाणं यस्मिंस्तथाभूतश्चा जातिविशेषो विलक्षणसामान्यम्। अनुभवसाक्षिकत्वकथनेन 'सचेतसामनुभव प्रमाणं तत्र केवलम्' इति दर्पणदर्शितस्तत्र प्रत्यक्षेतरप्रमाणविरहो बोध्यते तथा चान्येषामानन्दानामेतादृशलोकोत्तरत्ववैधुर्यात् सङ्ग्रहीतुमशक्यत्वात् दोषः।

उपर्युक्तप्रतिपादनेनैषा शङ्का जागर्ति यत्—नन्वीदृशं लोकोत्तरचमत्कार को जनयतीत्याकाङ्क्षायामाह—'कारणं च तदवच्छिन्ने भावनाविशेषः पुनः पुनरनुसन्धानात्मा'।

अत्रायमाशयः—चमत्कारत्वापरपर्यायेण लोकोत्तरत्वजात्याऽवच्छिन्ने परिचितेऽर्थात् विशिष्टे लोकोत्तरानन्दे पुनः पुनः अनुसन्धानरूपो—धारावाहिकः भावनाविशेषः शाब्दबोधात्मकोऽनुभव एव कारणमस्ति। सारांशोऽयं ज्ञातव्यः यत् यदा वयं कमपि काव्यवाक्यं शृणुमः तदा शक्तिः (स्मरणादि) या शाब्दबोधस्य सामग्रीमतः तदनुसारं प्रथमं वाच्यार्थबोधो भवति, तदुत्तरं यदि व्यङ्ग्योऽर्थः विद्यते तदा व्यञ्जनया वृत्त्या तद्बोधो भवति यत् सहृदयेभ्यः रोचते, अतः सहृदयाः बारम्बारं तद्बोधाय यतन्ते; यत्प्रयोजनाय पुनः पुनः तच्छब्दान् पठन्ति। अनेन प्रकारेण प्रस्तुता सा बोधधारा सहृदयानामात्मनि पूर्वोक्तं लोकोत्तरानन्दं समुत्पादयति। तत्र व्यङ्ग्योऽर्थः न तिष्ठति, तत्र विलक्षणस्य वाच्यार्थस्य तादृशी बोधधारा (भावना) एवानन्दसृष्टिं करोति।

अत्रायं विमर्शः—'पुत्रस्ते जातः' 'धनं ते दास्यामि'।

ननु काव्यलक्षणप्रसङ्गे 'रमणीयार्थस्य' प्राथमिकी चर्चा विद्यते रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता भवति, अत्रैव शङ्कोदेति यत् आह्लादे लोकोत्तरनिवेशस्य किं फलं भवतीति। एतज्जिज्ञासासमाधानाय तत्कारणं सुस्पष्टीक्रियते यत्—'पुत्रस्ते जातः' 'धनं ते दास्यामि' इति वाक्यार्थजन्याह्लादस्य न लोकोत्तरत्वम्, अतो न तस्मिन् वाक्ये काव्यत्वप्रसक्तिः।

अत्रायं भावः—यद्यपि 'तव गृहे पुत्रः सञ्जातः' 'तुभ्यमहं धनं दास्यामि' इत्याभ्यां वाक्याभ्यां समुत्पन्ना भावनाऽपि सन्तुष्टिदायिनी विद्यते, तथापि—एते वाक्ये काव्यं नैव भवितुमर्हतः, यतो हि—अनयोः वाक्यार्थयोः भावनया सम्भावितानन्दो लोकोत्तरो न भवति—अत एव सहृदयान् तस्मिन् आनन्दे लोकोत्तरत्वस्य प्रतीतिर्न भवति। प्रस्तुते काव्यस्य मूललक्षणे यद्यपि 'शब्दः' इत्येकः एकवचनान्तप्रयोगो विहितोऽस्ति, तथापि सा एकत्वसङ्ख्या विवक्षिता नास्ति। एतेनेदमायातं यत् काव्यस्येदं लक्षणं (स्वरूपम्) समागतं यत्—यस्य शब्दस्य येषां शब्दानां वाऽर्थभावनया कस्याप्यलौकिकस्यानन्दस्य प्राप्तिर्भवेत् तत् काव्यमिति।

(५) प्रश्नः—काव्यलक्षणे रमरणीयतापदार्थं परिष्कृत्य तत्र जनकत्वमुत्पादकत्वमन्यद्वेति निर्णयत। (सं० सं० वि० वि० १९८९)

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमाननात् सम्बन्धितोऽस्ति। अत्र पूर्ववर्त्याचार्यैः कृतेषु काव्यलक्षणेषु सत्स्वपि पण्डितराजः किमपि नवीनं सर्वोत्कृष्टं लक्षणं प्रस्तौति यत्—

'रमणीयार्थप्रतिपादकः शब्दः काव्यम्।'

प्रस्तुतेऽस्मिन् काव्यलक्षणे का नाम रमणीयता? इति जिज्ञासायां तत्-पदार्थस्य परिष्कारः आवश्यकः। तथा चात्र—

लोकरुचिवैचित्र्येणार्थनिष्ठाया रमणीयताया अव्यवस्थानाद् व्यवस्थिति-माचष्टे—'रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता।' अत्रायमाशयः ग्रन्थाकारमुखेन—लोकोत्तरचमत्कारविशेषस्यात एवालौकिकस्याह्लादस्यानन्दस्य जनकमुत्पादकं यज्ज्ञानं तद्गोचरता तन्निरूपितविषयतारूपार्थनिष्ठा रमणीयते-त्यर्थः। नन्वत्र शङ्कते यत्—आह्लादनिष्ठं लोकोत्तरत्वं सातिशयं भवेत् निरतिशयं वा? एतद्विचारावसरे—आद्ये तन्निवेशेऽपि बहुविधानामानन्दानां पूर्ववत् सङ्ग्रहेणानुगमो भविष्यति—अन्यत्र च ब्रह्मानन्दस्यैव ग्रहणं भविष्यति तस्माल्लोकोत्तरत्वव्याख्यानमावश्यकमिति कृत्वा लोकोत्तरत्वं सूचयति ग्रन्थकारः—

लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जाति-विशेषः। अत्र कथनस्याभिप्रायो वर्तते यत्—अत्रत्यं लोकोत्तरत्वं न सातिशयं भजते न चापि निरतिशयत्वमिति। अत्र तु घटत्वं पटत्वमिवानन्दे संस्थित एको

जातिविशेषः यस्यापरपर्यायः चमत्कारत्वमिति । सहृदय-साहित्यिकानामनुभव एव जातेः सत्तायामस्य प्रमाणमस्ति । अत्रायं स्फुटार्थः—यत्र यत्र आनन्दे सहृदयान्—'लोकोत्तरः लोकोत्तरः' इत्यस्यानुभवो भवेत् स एव आनन्दः लोकोत्तरः । इतः पूर्वमाचार्यप्रवरेण श्रीविश्वनाथेन साहित्यदर्पणे उक्तं यत्—

'सचेतसामनुभवः प्रमाणं तत्र केवलम् । इति । एतेन सुस्पष्टं भवति लोकोत्तरस्य व्याख्यानम् ।

अत्राप्याकाङ्क्षा जागर्ति यत्—एवम्भूतं लोकचमत्कारं क उत्पादयतीत्याशङ्क्य आह—'कारणं च तदवच्छिन्ने भावनाविशेषः पुनः पुनरनुसन्धानात्मा ।

अत्रायं भावः—चमत्कारत्वापरपर्याय-लोकोत्तरत्वजात्यावच्छिन्नः परिचितः अर्थात् विशिष्टे लोकोत्तरानन्दे पुनः पुनः अनुसन्धानरूपः धारावाहिको भावनाविशेषः शाब्दबोधनात्मक अनुभव एव कारणमस्ति । अत्राह्लादे लोकोत्तरनिवेशे कारणमाह—'पुत्रस्ते जातः' 'धनं ते दास्यामि' इति वाक्यार्थधीजन्याह्लादस्य न लोकोत्तरत्वम्, अतो न तस्मिन् वाक्ये काव्यत्वप्रसक्तिः' ।

निष्कर्षश्चात्र—यद्यपि तव गृहे पुत्रः सञ्जातः, 'तुभ्यमहं धनं दास्यामि' एभिर्वाक्यैः समुद्भूता भावनाऽपि—आनन्दप्रदैव, परञ्चैतानि वाक्यानि काव्यपदे आरोढुं न शक्नुवन्ति; यतो ह्येषां वाक्यार्थानां भावनया समुत्पन्नः आनन्दः नैव लोकोत्तरः भवितुमर्हति । सहृदयानां मते तस्मिन् आनन्दे लोकोत्तरत्वस्य प्रतीतिर्न भवति । अपरञ्च—काव्यमूललक्षणे यद्यपि 'शब्दः' अयमेकवचनान्तः प्रयोगो वर्तते तथापि तत्र एकत्वसङ्ख्या विवक्षितो नास्ति । एतेनेदमायातं यत्—यया शब्दार्थभावनया कस्याप्यलौकिकस्यानन्दस्य प्राप्तिर्भवेत्, तत्रैव काव्यत्वम् ।

साम्प्रतं पण्डितराजाः काव्यलक्षणनिष्कर्षं चमत्कारजनकतासम्बन्ध चोपस्थापयन्ति । तद्यथा—

इत्थं चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम्, यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वम्, स्वविशिष्टजनकताऽवच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारवत्वमेव वा काव्यत्वमिति फलितम् ।

परञ्चोपर्युक्तयोः प्रथम-द्वितीयपरिष्कारयोः समस्याद्वयं तिष्ठति । तत्र प्रथमे यथा—यत्र कस्यचित् स्मृतिविशेषरूपा धारावाहिनी भावना जनिष्यते तत्र चमत्कारजनकभावनाविषयीभूते वाक्यकदम्बके काव्यत्वमतिव्याप्स्यति । अस्यां स्थितौ द्वितीयः परिष्कारो भवति, तत्रापि यत्तत्पदघटिततया गौरवदोष-

दुष्टम्। पुनश्च यत्तच्छब्दयोरर्थोऽप्यवस्थितोऽस्ति। तस्मात्तृतीयपरिष्कारस्यागमो भवति। तद् व्याख्यानं यथा—स्वशब्देनात्र चमत्कारत्वस्य ग्रहणम्। स्वविशिष्टा—चमत्कारत्वावच्छिन्नकार्यतानिरूपिता या (भावना निष्ठा) जनकता, तदवच्छेदको योऽर्थः तत्प्रतिपादकतासंसर्गः=तत्प्रतिपादकत्वसम्बन्धः, तेन सम्बन्धेन चमत्कारत्वविशिष्टे सति शब्दत्वमेव याथार्थ्येन काव्यत्वमिति पर्यवसितम्।

(६) प्रश्नः (क) पण्डितराजोक्तं काव्यलक्षणं सपदकृत्यं निरूप्य तत्परिष्कृतं तृतीयं काव्यलक्षणं स्फुटीकरणीयम्। (सं० सं० विश्व० १९८४)

(ख) पण्डितराजदिशा काव्यलक्षणं परिष्कृत्य कस्मिंश्चिदुदाहरणे सङ्घटयन्तु।

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमाननस्य काव्यलक्षणप्रसङ्गात् सम्बन्धितोऽस्ति। तत्र पण्डितराजेन जगन्नाथेन काव्यलक्षणं प्रतिपादितम्, यत्—

'रमणीयार्थप्रतिपादकः शब्दः काव्यम्।'

उपर्युक्तलक्षणस्य, सपदकृत्यं व्याख्यानं यथा—रमणीयस्य अतिमनोहरस्य अर्थस्य प्रतिपादकः निरूपकः—अर्थात् येन शब्देन रमणीयस्यार्थस्य बोधो भवेत् सः शब्दः काव्यमस्ति। प्रस्तुतेऽस्मिन् लक्षणे 'शब्द' पदं यदि न स्यात्, नाप्युल्लेखो भवेत्तदा—रमणीयार्थस्य प्रतिपादकः यः स्यात् तदेव काव्यमित्येव यदि लक्षणं स्यात् तदा रमणीयानुरागरूपमर्थव्यञ्जकः रमणी-कटाक्ष-निक्षेपादयोऽपि 'काव्यं' स्यात्; अतः शब्दस्य लक्षणे सन्निवेशः अर्थे रमणीयविशेषणस्य फलम् अरमणीयार्थबोधकस्य 'घटमानय' इत्यादि साधारणवाक्यस्यापि काव्यत्वं स्यात्, तन्निरासाय तत्पदम्। वाचक-लक्षक-व्यञ्जकयुक्ताः त्रयः शब्दाः साहित्यशास्त्रे स्वीकृताः, ते त्रयोऽपि काव्यभाजिनः स्युः यदि तेषामर्थाः रमणीयाः स्युः। अमुं निर्देशं सूचनायैव लक्षणे वाचको व्यञ्जको वा न कथयित्वा प्रतिपादकपदस्य ग्रहणमभूत्। रमणीय शब्दस्य प्रतिपादकास्तु व्याकरणस्यापि शब्दाः, तेषु काव्यत्वापत्तिः न स्यादेतदर्थम् अर्थपदस्य सन्निवेशः मन्तव्यः। इत्थं काव्यलक्षणस्य सपदकृत्यं निरूपणानन्तरं ग्रन्थकारपरिष्कृतं तृतीयं काव्यलक्षणं यथा—

स्वविशिष्टजनकताऽवच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्।

अत्रायं परिष्कारः—काव्यस्य परिष्कृते द्वितीये लक्षणे काव्यपदं शक्यतावच्छेदकगुरुत्वात् गौरवमपि भविष्यति—लक्षणे तु लघुत्वं भवेत्—तन्नाभूत् एतदर्थमेव 'स्वविशिष्टजनकता' इत्यादि तृतीयलक्षणस्य सङ्कल्पोऽभूत्। तृतीयपरिष्कारानुसारेण काव्यस्य लक्षणमभूत्—चमत्कारत्ववत्त्वम्' इत्येव। न च तत् महत् न वा यत्तत्पदाभ्यां घटितमेवातः गौरवस्यानुगमनस्य शङ्का निरस्ता। अत्र लोकोत्तरत्वस्य पर्यायः चमत्कारत्वजातिविशेषः स्वीकृतः। यो हि साक्षात्सम्बन्धेन चमत्कारः लोकोत्तरानन्दे एव स्थास्यति न तु काव्ये, तथापि प्रोक्तम्—'स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतारूपं परम्परासम्बन्धेन काव्ये एव स्थास्यति। इत्यत्रालं विवादेन। वस्तुतस्त्वत्र—स्वपदेन चमत्कारत्वस्य ग्रहणमावश्यकमिति। समवायसम्बन्धेन तद्विशिष्टो भविष्यति—चमत्कारः। तस्य ( तन्निरूपितस्य ) जनकता भविष्यति—भावनायाम्, तज्जनकतया विषयतासम्बन्धावच्छिन्नावच्छेदकता स्थास्यति काव्यार्थे, अर्थात् विषयता-सम्बन्धेन काव्यार्थोऽपि भावनायां प्रकारता भवति। अतः सः काव्यार्थोऽपि भावनानिष्ठजनकताया अवच्छेदको भविष्यति, तस्य काव्यार्थस्य प्रतिपादको भविष्यति शब्दः। अतः तादृशप्रतिपादकतासम्बन्धेन स्वे ( चमत्कारवत्वे ) शब्दे स्थास्यति।

इत्थं तृतीयकाव्यलक्षणस्य परिष्कृतं व्याख्यानं स्फुटीकृतं विचक्षणाः निमालयन्तु।

( ७ ) **प्रश्नः**—उत्तमोत्तमकाव्यस्वरूपं निरूप्य 'शयिता सविधेऽप्यनीश्वरा' इत्याद्युदाहरणे रसध्वनिर्भावध्वनिर्वा इति विवेचनीयम्।

( सं० सं० विश्व० १९८४ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमाननस्य काव्यलक्षणप्रकरणात् सम्बन्धितोऽस्ति। तत्र काव्यस्वरूपनिरूपणानन्तरं तस्य चतुर्विध-भेदानां प्रतिपादनमस्ति। सर्वप्रथमं काव्यस्वरूपमाह ग्रन्थकारः—

शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम्। एतदेवोत्तमोत्तमकाव्यस्वरूपम्।

ध्वनिश्च—'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥'

अत्रायमाशयः—तथा च यस्मिन् शब्दार्थौ ( वाच्य-लक्ष्य-व्यङ्ग्याः ) द्वावपि स्वात्मानं गौणं विधाय कमपि चमत्कारोत्पादकं ( प्रधानं ) अर्थमभिव्यञ्जयेताम्—व्यञ्जनया वृत्त्या बोधयतः तत् काव्यमाद्यमुत्तमोत्तमं भवति ।

अत्राहुः—प्रस्तुतेऽस्मिन् लक्षणे 'कमपि' इति पदेन चमत्कारजनकत्वेन प्रधानोऽर्थः विवक्षितोऽस्ति । अतः यत्र व्यङ्ग्यमत्यन्तगूढमथवातिशयस्पष्टं स्यात्तत् काव्यमुत्तमोत्तमं न भविष्यति—यतो ह्येतादृशानि व्यङ्ग्यानि चमत्कारजनकानि न भवन्ति । असुन्दरव्यङ्ग्यस्यापि वारणमनेनैव विशेषणेन ज्ञेयम् । अपराङ्गं वाच्यसिद्ध्यङ्गं च व्यङ्ग्यमपि चमत्कारजनकं भवति । अतोऽस्मिन् भेदे तयोरपि ग्रहणं न स्यात्, तस्माद्धेतोः लक्षणे स्वमात्मानं गौणं विधाय प्रतिपादितं यस्यायमाशयः—शब्दार्थाभ्यां व्यङ्ग्ये प्रधानता स्यात्, तत्तु अपराङ्गप्रभृतिव्यङ्ग्येषु न भवति, व्यङ्ग्यास्तु गौणरूपेण तिष्ठन्ति । अतस्ते तादृशाः उत्तमोत्तमकाव्यत्वं न भजन्ते । साम्प्रतं स्वीयप्रतिज्ञानुसारं स्वनिर्मितमभिनवमुदाहरणं प्रस्तौति ग्रन्थकारः—

'शयिता सविधेऽप्यनीश्वराः सफलीकर्तुमहो मनोरथान् ।
दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते ॥'

अस्मिन् उदाहरणे नायिकानिष्ठरतेः, आलम्बनविभावनायको वाच्यः, एकान्तस्थानरूपोद्दीपनविभावः, पति-पत्न्योः समीपशयनाक्षिप्तो भवति, नायिकाकर्तृको नायकमुख-निरीक्षणरूपोऽनुभावोऽपि वाच्य एवास्ति । लज्जौत्सुक्यरूपो व्यभिचारिभावः क्रमशः नयनगतदरनिमीलन-निरीक्षणाभ्यां व्यक्तो भवति । एषां भावानां संयोगेन नायकविषयक-नायिकानिष्ठा रतिः ( स्थायीभावः ) व्यङ्ग्यो भवति, या रतिः परिपुष्टायां सत्यां सम्भोगश्रृङ्गाररसः—सहृदयानां पाठकानामास्वाद्योऽस्ति । अत्रत्योऽयं व्यङ्ग्यः—अतिचमत्कारोत्पादकः तथा चात्र शब्दार्थौ गौणौ स्तः । अनेन प्रकारेणास्मिन् उदाहरणे उत्तमोत्तमकाव्यस्य लक्षणं सङ्गटितं भवति । तस्मादत्र रस एव ध्वन्यते न तु भावः । इत्यलं पल्लवितेनेति दिक् ।

( ८ ) प्रश्नः—शब्दविशेषस्यैव काव्यत्वं शब्दार्थयुगलस्य वेति वैमत्ये भवदभिमतं काव्यपदार्थत्वं साध्यताम् । ( सं० सं० विश्व० १९८७ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने—ग्रन्थकारकृतस्वकीयकाव्यलक्षणप्रतिपादनानन्तरं समायाति । तत्र

काव्यप्रकाशकृतो मम्मटस्य काव्यलक्षणे विशेष्यदलेऽर्थस्य निक्षेपमाक्षिपति। तद्यथा—

"यत्तु प्राञ्चः—'अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्' इत्याहुः। तत्र विचार्यते—शब्दार्थयुगलं न काव्यशब्दवाच्यम्, मानाभावात् 'काव्यमुच्चैः पठ्यते' 'काव्यादर्थोऽवगम्यते' 'काव्यं श्रुतम्' 'अर्थो न ज्ञातः' इत्यादि विश्वजनीनव्यवहारतः प्रत्युत शब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च।"

अत्रायमाशयः—काव्यप्रकाशकाराः दोषरहितं गुणालङ्कारसहितं शब्दयुगलं काव्यमिति कथयन्ति, ते क्वापि 'अनलङ्कृती' इत्यपि कथयन्ति। परञ्च पण्डितराजजगन्नाथस्य कथनमस्ति यत्—नैतल्लक्षणं समुचितमिति। कारणञ्चात्र स्पष्टमस्ति—प्रथमतः शब्दार्थयुगलं काव्यमिति स्वीकारे प्रमाणाभावः। प्रत्युत—'काव्यम् उच्चैः पठ्यते' 'काव्यात् अर्थः अवगम्यते' इत्यादि सार्वजनिकव्यवहारैः विशिष्टप्रकारस्य शब्द एव काव्यमिति सिद्ध्यति, न चार्थः, शब्दार्थौ द्वावपि काव्ये स्वीकृते उक्तव्यवहारस्याभावो भवेत्, यदि चार्थोऽपि काव्यं भवेत्तदा तस्य पाठः कथं सम्भवः? अर्थस्यापि काव्यस्यान्तर्भुक्ते काव्यादर्थस्य ज्ञानमपि न भविष्यति, अर्थमिश्रितस्य काव्यस्य श्रवणमपि समुचितं न ज्ञायते, अतः शब्दमात्रमेव काव्यमिति समुचितं न तु शब्दार्थाविति।

सम्प्रति प्रतिपक्षिपक्षं तिरस्कृत्य स्वाभिमतं मतं प्रकाशयति। यथा—

'व्यवहारः शब्दमात्रे लक्षणयोपपादनीय इति चेत्, स्यादप्येवम्, यदि काव्यपदार्थतया पराभिमते शब्दार्थयुगले काव्यशब्दशक्तेः प्रमापकं दृढतरं किमपि प्रमाणं स्यात्। तदेव तु न पश्यामः।

अत्रायं भावः—यदि चेत् भवन्तः कथयिष्यन्ति यत्—यत्र केव शब्दमुद्दिश्यैव काव्यपदस्य प्रयोगः कृतः स्यात् तत्र लक्षणावृत्त्या कार्यमभूत्, अर्थात्—उक्तेषु व्यावहारिकवाक्येषु काव्यपदस्य लाक्षणिकः प्रयोगो विद्यते, शब्दार्थयुगलवाचकस्य काव्यपदस्य प्रयोगो लक्षणावृत्त्या केवलं 'शब्देऽपि सम्भवः, यथा समस्तपाञ्चालदेशवाचकस्य पाञ्चालशब्दस्य प्रयोगः 'पूर्वे पाञ्चालाः' इत्यादिस्थानेषु देशस्यैकभागे एव लक्षणया भवति, अस्य तर्कस्योत्तरं पण्डितराजाः ददति यत्—भवतः इदं कथनं ( लक्षणया कार्यसम्पादनम् ) तदा सङ्गतं भवेत्, यदा भवन्तः केनापि प्रबलप्रमाणेनेति सिद्धिं कुर्युः—यत् काव्यपदस्य मुख्यार्थः ( वाच्यार्थः ) शब्दार्थौ द्वावपि स्तः, परञ्चैतादृक् प्रमाणमेव तु न दृष्टिगोचरी-भवति। नन्वत्र कथं प्रमाणाभावः? प्रमाणान्तरविरहेऽपि मम्मटादिप्राची-

नोक्तेरेव प्रमाणत्वात्; तदाह—'विमतवाक्यं त्वश्रद्धेयमेव' अर्थात्—मम्मटास्त्वत्र वादिनः सन्ति; तदनुसारं शब्दमेव प्रमाणं कथं स्वीकुर्यामः।

अत्रायमन्तिमो विमर्शः—

इत्थं चासति काव्यशब्दस्य शब्दार्थयुगलशक्तिग्राहके प्रमाणे प्रागुक्ताद् व्यवहारतः शब्दविशेषे सिद्धयन्तीं शक्तिं को नाम निवारयितुमीष्टे ?

निष्कर्षश्चात्र—अनया पद्धत्या शब्दमात्रकाव्यस्वीकारे कापि विशेषरूपा युक्तिर्नास्ति, अतः शब्दार्थौ काव्यमिति स्वीकर्त्तव्यमित्यस्य तर्कस्याप्युत्तरं सञ्जातम्। यतः शब्दमात्रं काव्यस्वीकारे पूर्वोक्तो व्यवहाररूपो विनिगमको विद्यमान एव।

पर्यन्ते इदमायातं यत्—'तदेवं शब्दविशेषस्यैव काव्यपदार्थत्वे सिद्धे तस्यैव लक्षणं वक्तुं युक्तम्, न तु स्वकल्पितस्य काव्यपदार्थस्येति। इत्यलं पल्लवितेन।

( ९ ) **प्रश्नः** ( क ) काव्यत्वं शब्दार्थयुगले पर्याप्तं शब्दविशेषे वा नियतमिति विचारयत। ( सं० सं० वि० १९७६ )

( ख ) काव्यलक्षणप्रसङ्गे पण्डितराजोक्तदिशा मम्मटलक्षणे दोषानुद्भावयत।

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने काव्यलक्षणनिरूपणानन्तरं काव्यत्वं शब्दार्थयुगले पर्याप्तं शब्दविशेषे वा नियतमिति विचारोपस्थापनं विद्यते। तद्यथा—'यत्तु प्राञ्चः ( काव्यप्रकाशकारादयः ) 'अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्' इत्याहुः। तत्र विचार्यते—शब्दार्थयुगलं न काव्यशब्दवाच्यम्, मानाभावात्, काव्यमुच्चैः पठ्यते, 'काव्यादर्थोऽवगम्यते' 'काव्यं श्रुतम्, अर्थो न ज्ञातः' इत्यादि विश्वजनीन व्यवहारतः प्रत्युत शब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च।'

अत्रायं भावः—श्रीमद्भिः काव्यप्रकाशकारैः मम्मटाचार्यैः दोषरहितौ गुणालङ्कारसहितौ शब्दार्थौ काव्यं स्वीकृतम्। अलङ्कारांशे ते शैथिल्यपक्षपातिनः, अतः क्वचित् स्पष्टालङ्कारविरहेऽपि—अथवा अंशे स्थिते शब्दार्थसमूहं काव्यमिति मन्यन्ते। परञ्च पण्डितराजाः जगन्नाथाः कथयन्ति यत् लक्षणमिदमुचितं न विद्यते, कारणञ्चात्र शब्दार्थयुगलं काव्यस्वीकारेऽपि प्रमाणं नास्ति। प्रत्युत 'काव्यम् उच्चैः पठ्यते, काव्यात् अर्थोऽवगम्यते, काव्यं श्रुतम् अर्थो न ज्ञातः' इत्यादि सार्वजनिकव्यवहारेण विशिष्टप्रकारस्य शब्द

एव काव्यं सिद्धं भवति, अर्थौ नैव । यतः शब्दार्थौ काव्यस्वीकारे उक्त व्यवहाराः न भविष्यन्ति—यद्यर्थोऽपि काव्यं भवेत्तदा तस्य पाठः कथं सम्भवः ? अर्थस्यापि काव्यमध्ये समागते काव्यादर्थस्य ज्ञानमपि न सम्भवः, अर्थमिश्रितस्य काव्यस्य श्रवणमपि समुचितं न प्रतिभाति । अतः शब्दमात्रमेव काव्यस्वीकरणं समुचितम्, नापि शब्दार्थाविति । साम्प्रतं विपक्षिपक्षं ( मतान्तरम् ) प्रस्तूय ग्रन्थकारः तत्पक्षं खण्डयति । यथा—

'व्यवहारः शब्दमात्रे लक्षणयोपपादनीय इति चेत्, स्यादप्येवम्, यदि काव्यपदार्थतया पराभिमते शब्दार्थयुगले काव्यशब्दशक्तेः प्रमापकं दृढतरं किमपि प्रमाणं स्यात् । तदेव तु न पश्यामः ।

ननु तत्र कथं प्रमाणाभावः ? इति जिज्ञासायाम्—यदि भवन्तः कथयन्ति यत् प्रमाणं कथं न दृष्टिगोचरी भवति ? किं भवन्तः शब्दप्रमाणं न स्वीकुर्वन्ति—अर्थात् आचार्यमम्मटस्य वाक्यमेव शब्दार्थयुगलं ( तददोषौ शब्दार्थौ सगुणावनलङ्कृती क्वापि ) काव्यपदवाच्यत्वे प्रमाणमस्ति । अस्तु । शब्दमहं प्रमाणत्वेन स्वीकरोमि—परञ्च 'आप्तशब्दम्' प्रतिवादिनः शब्दं न, मम्मटस्तु प्रतिपक्षी । एवं प्रतिपक्षिसिद्धान्तं प्रतिक्षिप्य ग्रन्थकारः स्वमतं दृढीकरोति, तद्यथा—'इत्थं चासति काव्यशब्दस्य शब्दार्थयुगलशक्तिग्राहके प्रमाणे प्रागुक्ता[illegible] व्यवहारतः शब्दविशेषे सिद्धयन्तीं शक्तिं को नाम निवारयितुमीष्टे ? अस्मिन् विषये प्रमाणस्यापि सान्निध्यमेव । यथा—

'शक्तिग्रहं व्याकरणोपमान-कोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति, सान्निध्यतः सिद्धपदस्य वृद्धाः ॥'

अत्रायमाशयः—अनेन प्रकारेण यदा शब्दार्थयोः काव्यपदस्याभिधाशक्ति प्रमाणयिता न किमपि प्रमाणं विद्यते । तदा पूर्वोक्तैः व्यवहाररूपप्रमाणैः शब्दमात्रे सिद्धां काव्यपदशक्तिं को निवारयितुं क्षमः ? कोऽपि न ।

अनेन शब्दमात्रं काव्यस्वीकारे न कापि विशेषा युक्तिर्विद्यते, अतः 'शब्दार्थौ' काव्यं स्वीकरणीयमिति तर्कस्याप्युत्तरं भवति, यतः शब्दमात्र काव्यस्वीकारे पूर्वोक्तो लौकिकव्यवहाररूपविनिगमको विद्यमानोऽस्ति ।

अयमत्र निष्कर्षः—

'तदेवं शब्दविशेषस्यैव काव्यपदार्थत्वे सिद्धे, तस्यैव लक्षणं वक्तुं युक्तं न तु स्वकल्पितस्य काव्यपदार्थस्य ।' इत्यलं पल्लवितेन । अस्मिन् विषये [illegible] विचाराः पर्याप्तरूपेण समुदिताः ।

( १० ) प्रश्नः—शयिता सविधेऽप्यनीश्वरा इत्यादि पद्यं व्याख्याय अत्र रतेः प्राधान्यं त्रपादावेत्यत्र ग्रन्थकृन्मतं समालोचयन्तु ।

( सं० विश्व० १९८७ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने काव्यभेदनिरूपणप्रसङ्गात् सन्दर्भितोऽस्ति । नन्वत्र चतुर्षु काव्यप्रकारेषु प्रथमस्य लक्षणं विद्यते—शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यक्तस्तदाद्यमिति । अस्यैवोदाहरणमस्ति—

'शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान् ।
दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते ॥'

प्रस्तुतमिदं पद्यं प्रतिज्ञानुरूपग्रन्थकृन्निर्मितमेव विद्यते । उत्तमोत्तमकाव्यस्य उदाहरणमिदम् । अनेन पद्येन कश्चिन्नववधूवृत्तान्तं वर्णयति । अस्मिन् पद्ये व्यङ्ग्यस्वरूपं यथा—'अत्रालम्बनस्य, सविधशयनाक्षिप्तस्य रहःस्थानादेरुद्दीपनस्य च विभावस्य, तादृशनिरीक्षणादेरनुभावस्य, त्रपौत्सुक्यादेश्च व्यभिचारिणः संयोगाद् रतिरभिव्यज्यते ।

अत्रायमाशयः—नायिकानिष्ठायाः रतेः आलम्बनविभावनायकः वाच्यः, एकान्तस्थानरूपोद्दीपनविभावः, पति-पत्न्योः समीपशयनादाक्षिप्तो भवति, नायिकाकर्तृकः—नायकमुखनिरीक्षणानुभावोऽपि वाच्य एव लज्जा तथा—औत्सुक्यरूपो व्यभिचारिभावः क्रमशः नयनगतदरमीलननिरीक्षणैश्च व्यक्ताः भवन्ति । एषां सर्वेषां भावानां संयोगात् नायकविषयिका नायिकानिष्ठा रतिः ( स्थायीभावः ) व्यङ्ग्यो भवति । अत्रत्योऽयं व्यङ्ग्यचमत्कारपूर्णः ।

अत्र नायिकेच्छाविशेषस्यैव प्रधानव्यङ्ग्यतामाशङ्क्य परिहरति । यथा—

'न च यद्ययं शयितः स्यात्, तदाऽस्याननं चुम्बेयम्, इति नायिकेच्छाया एव व्यङ्ग्यत्वमत्रेति वाच्यम्, मनोरथान् सफलीकर्तुमसमर्था इत्यनेन मनोरथाः सर्वेऽस्या हृदि तिष्ठन्तीति प्रतीतेः स्वशब्देन मनोरथपदेन मनोरथत्वाकारेण तादृशेच्छाया अपि निवेदनात्' । एवमनेकविधैस्तर्कैरिच्छाया प्रधानव्यङ्ग्यतायाः निरसनं भवति ।

अधुना रतेः प्राधान्यं त्रपादावेत्यस्य विचारः उपक्रमते । तद्यथा—

एवं त्रपाया अपि न प्राधान्येन व्यङ्ग्यत्वम्, अनुवाद्यताऽवच्छेदकतया प्रतीतायां तस्यां मुख्यवाक्यार्थत्वायोगात् ।

अत्रायं सारांशः—योंऽशः विधेयो भवति, तस्मिन्नेव वाक्यस्य तात्पर्यं भवति, तात्पर्यविषयभूतोऽर्थश्चैव वाक्यार्थः कथ्यते । अतः लज्जा ( त्रपा )

केनापि प्रकारेण मुख्यवाक्यार्थो नैव। एवं त्रपायाः कोटिप्रकल्पना अग्रेऽपि प्रचलति।

पर्यन्ते—लज्जामेव गौणव्यङ्ग्यस्वीकारे—औचित्यस्य रक्षाऽपि भविष्यति, एतदेव स्पष्टीकुर्वन्ति। ग्रन्थकाराः—

'वाच्यवृत्त्या रतेरनुभावे निरीक्षणे त्रपाया अनुभावस्य दरमीलनस्येव, व्यञ्जनया तस्यां तस्या अपि गुणीभावप्रत्ययौचित्यात्।

अत्रायमभिप्रायः—रतेः कार्यमवलोकनं लज्जायाश्च कार्यं चक्षुरुन्मीलनं गौणमस्ति। अत्रावसरे भवन्त एव विचारयन्तु यदाभ्यां द्वाभ्यां कार्याभ्यां व्यक्तयोः रति-लज्जयोः का प्रधानभूता भविष्यति। स्पष्टमुत्तरमत्र—वाच्यकोटौ यस्य कार्यं प्रधानमस्ति व्यङ्ग्यकोटौ तेन कार्येण व्यञ्जितं तत् कारणं प्रधानं, वाच्यकोटौ च यस्य कार्यं गौणमस्ति। व्यङ्ग्यकोटौ तत्कार्यादभिव्यक्तं कारणं गौणमेव स्यादित्येव समुचितम्।

किमधुनाऽपि रतिः प्रधानभूता लज्जा च गौणरूपा इत्यत्रास्ति सन्देहावसरः, नैवेति।

**( ११ ) प्रश्नः** ( क ) निःशेषच्युतचन्दनमित्यादि पद्ये दीक्षितोक्तिः सावतरणं खण्डनीया।

( अथवा )

( ख ) 'निःशेषच्युतचन्दनम्' इति पद्ये दीक्षितोक्तव्यङ्ग्यव्यञ्जकताप्रकारः समुचितो न वेति स्वसिद्धान्तानुसारं निर्णीयताम्।

( सं० विश्व० १९८६ )

( ग ) निःशेषच्युतेति पद्येऽप्पयदीक्षितसरणिं निरस्य पण्डितराजाभिमतं प्रकाशयन्तु।

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराज-जगन्नाथप्रणीतस्य रसगङ्गाधरस्य प्रथमानने उत्तमोत्तमकाव्यमेव ध्वनिकाव्यमिति प्राचीनैः स्वीकृतमित्यवसरे प्रस्तुतमिदं पद्यं पूर्णं यथा—

'निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि ! दूति बान्धवजनस्याज्ञातपीडाऽऽगमे
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम्॥'

अमरुशतकघटकोऽयं श्लोकः। सुप्रसिद्धैः आलङ्कारिकैः अप्पयदीक्षितैः चित्रमीमांसानामके स्वनिबन्धे प्रस्तुतं पद्यं ध्वनिकाव्यस्योदाहरणमिति स्वीकृतं तस्मिंश्च ध्वनिकाव्यतायाः सिद्धयै तस्य पद्यस्य व्याख्या स्वानुकूलतया कृतं पण्डितराजाय तन्न रोचते, अतः पण्डितराजः दीक्षितमतस्य खण्डनाय खड्गहस्तः सन् तन्मतस्योपपादनं प्राक्करोति।

यत्तु ( पण्डितराजमुखेनैव )—

'चित्रमीमांसायामप्पयदीक्षितैः 'निश्शेषच्युतचन्दनम्' इति पद्यं ध्वन्युदाहरण-प्रसङ्गे व्याख्यातम्। उत्तरीयकर्षणेन चन्दनच्युतिरित्यन्यथासिद्धिपरिहाराय निश्शेषग्रहणम्। ततश्चन्दनच्युतेः स्नानसाधारण्यव्यावर्तनेन सम्भोगचिह्नोद्घाट-नाय तटग्रहणम्। स्नाने हि सर्वत्र चन्दनच्युतिः स्यात्, तव तु स्तनयोस्तटे उपरिभाग एव दृश्यते इयमाश्लेषकृतैव। तथा च—'निर्मृष्टरागोऽधरः' इत्यत्र ताम्बूलग्रहणविलम्बात् प्राचीनरागस्य किञ्चिन्मृष्टतेत्यन्यथासिद्धिपरिहाराय निर्मृष्टरागः' इति रागस्य निश्शेषमृष्टतोक्ता। पुनः स्नानसाधारण्येत्यावर्तनेन सम्भोगचिह्नोद्घाटनाय 'अधरः' इति विशिष्यग्रहणम्। 'उत्तरोष्ठे सरागेऽधरोष्ठ-मात्रस्य निर्मृष्टरागता चुम्बनकृतैव' इत्यादिना 'इदमपि ध्वनेरुदाहरणम्। इत्यन्तेन सन्दर्भेण। 'तटादिघटिता वाक्यार्थाः स्नानव्यावृत्तिद्वारा सम्भोगाङ्गा-नामाश्लेषचुम्बनादीनां प्रतिपादनेन प्रधानव्यङ्ग्यव्यञ्जने साहायकमाचरन्ति इति।

साम्प्रतं पण्डितराजाः दीक्षितकृतस्य पूर्वोक्तस्य विवेचनस्य खण्डयन्ति—दीक्षितस्योक्तं विवेचनमनभिज्ञतासूचकमस्ति। अर्थात् ते अलङ्कारशास्त्रसारं सम्यक्तया न जानन्ति। यतो हि तदुक्तविवेचनं प्राचीनं सकलग्रन्थविरुद्ध-मस्ति।

तत्रादौ काव्यप्रकाशस्य सन्दर्भविरोधं दर्शयितुमुपक्रमते। तथाहि पञ्चमो-ल्लासे यथा—अत्रायमभिप्रायोऽस्ति यत्। प्रकृतश्लोके यः सम्भोगरूपोऽर्थः व्यङ्ग्यः स्वीक्रियते, तज्ज्ञानाय व्यञ्जनावृत्तेः आवश्यकता नैव, अनुमानेनापि तदर्थस्य ज्ञानं भविष्यति। एतन्मतस्य खण्डनप्रसङ्गे मम्मटभट्टाः कथयन्ति —सम्भोगस्य ज्ञानमनुमानेन तदा भवति यदा पद्ये—उक्तचन्दनच्युति-सम्भोगाः व्याप्याः भवन्ति। सम्भोगेनैव तत्सर्वं स्युरिति तन्न। एतत् त्वन्यथापि भविष्यति। अतस्तद्धेतुभिः सम्भोगस्यानुमितिर्नैव भवितुमर्हति।

अत्रेदं तात्पर्यं यत्—मम्मटः चन्दनच्युतिप्रभृतिं सम्भोगः; स्नानाद्यनेककारणैः निष्पाद्यमानः पदार्थः, भवन्तश्च ( दीक्षिताः ) कथयन्ति सम्भोगमात्रनिष्पन्नोऽसाधारणः पदार्थः इत्थं मम्मटग्रन्थात् विरुद्धत्वम्। एवमन्यत्रापि काव्यप्रकाशकृतो विरोधः।

अनेनैव प्रकारेण ध्वनिकृताऽऽनन्दवर्धनाचार्येण सहापि विरोधः तदेवाचष्टे—

एवं च व्यञ्जकानां साधारण्यं प्रतिपादयतां प्रामाणिकानां ग्रन्थैः सहासाधारण्यं प्रतिपादयतस्तव ग्रन्थस्य विरोधः स्फुटः। इत्येव किमु, अन्यदपि कारणमवलोकयन्तु; तथा चोक्तं प्रकृतग्रन्थे—'अपि च यथाकथञ्चिदङ्गीकुरु वाऽत्र व्यञ्जनाव्यापारं, तथापि न त्वेष्टसिद्धिः, वाच्यानां निश्शेषच्युतचन्दनस्तनतटत्वादीनामधमत्वस्य च त्वदुक्तरीत्या प्रकारान्तरेणानुपपद्यमानतया दूतीसम्भोगमात्रनिष्पाद्यत्वेन गुणीभूतव्यङ्ग्यत्वप्रसङ्गात्।

अनेन प्रकारेण दीक्षितमते युक्तिविरोधोऽप्यस्ति, अतस्तन्मतमिति अलमतिपर्यालोचनेनेति दिक्।

(१२) प्रश्नः—एवञ्च व्यञ्जकानां साधारण्यं प्रतिपादयतां प्रामाणिकानां ग्रन्थैः सह असाधारण्यं प्रतिपादयतस्तव ग्रन्थस्य विरोधः स्फुट इति जगन्नाथवाक्यं प्रसङ्गनिर्देशपुरस्सरं विशदीकुरुत। ( सं० विश्व० १९७६ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने ध्वन्युदाहरणप्रसङ्गात् सम्बन्धितोऽस्ति। नन्वत्र काव्यस्योत्तमोत्तमभेदं प्राचीनाचार्याः ध्वनिकाव्यमिति कथयन्ति।

वस्तुतः 'निश्शेषच्युतचन्दन'मित्यादि पद्ये ध्वनित्वस्थापनविषयेऽप्पयदीक्षित-पण्डितराजजगन्नाथयोः व्याख्यानपद्धतेः महत् तारतम्यं वर्त्तते तद्यथा आरभ्यते—'यत्तु चित्रमीमांसायामप्पयदीक्षितैः निश्शेषच्युतचन्दनमि'त्यादि पद्यतः दीक्षितमतं खण्डयति पण्डितराजः। यथोक्तं तत्र—'तदेतदलङ्कारशास्त्रतत्त्वानवबोधनिबन्धनम्, प्राचीनसकलग्रन्थविरुद्धत्वादुपपत्तिविरोधाच्च। अत्रैवावसरे काव्यप्रकाशकर्तुः अपि विचारः उदेति यत् सम्भोगरूपार्थव्यङ्ग्यस्वीकारे व्यञ्जनावृत्तेः आवश्यकतैव नास्ति अनुमानेनैवार्थज्ञानं भविष्यति। अनेनैव प्रकारेण ध्वन्यालोककारस्य राजानकस्य 'आनन्दवर्धनाचार्यस्यापि मतमस्ति। तेन ध्वन्यालोके प्रथमोद्योते कथितं यत्—'गधम्मि अ' इत्यस्मिन् पद्ये साधारणः सन्दिग्धव्यञ्जक-व्यङ्ग्योऽस्ति।

साम्प्रतं क्रमप्राप्तां प्रश्नगतां कारिकामाचष्टे ग्रन्थकारः । तद्यथा—

'एवञ्च व्यञ्जकानां साधारण्यं प्रतिपादयतां प्रामाणिकानां ग्रन्थैः सहासाधारण्यं प्रतिपादयतस्तव ग्रन्थस्य विरोधः स्फुटः' ।

अत्रायं भावः—अनेन प्रकारेण सुस्पष्टमिदं यत्—व्यञ्जकचन्दनच्युत्यादीनां साधारणतायाः प्रतिपादकानां प्रकाशकारादिग्रन्थेभ्यः व्यञ्जकस्य असाधारणतायाः प्रतिपादकस्याप्पयदीक्षितस्य ग्रन्थः विरुद्धोऽस्ति । नन्वत्र शङ्कते यत्—साधारणव्यञ्जकेनापि व्यङ्ग्यस्य सद्भावः प्रकाशारादि प्राचीनाचार्याभिमतोऽस्ति, तदाऽसाधारणव्यञ्जकेनापि व्यङ्ग्यस्य सद्भावः विरुद्धो नैव भवति । अतोऽधुना पण्डितराजाः दीक्षितमहोदयात् पृच्छन्ति यत्—'किञ्च यदिदं निश्शेषेत्यादि—अवान्तरवाक्यार्थानां वापीस्नानव्यावृत्तिद्वारेण व्यङ्ग्यासाधारण्यं सम्पाद्यते, तत् किमर्थमिति पृच्छामः । व्यङ्ग्यस्य व्यञ्जनार्थमिति चेन्न, व्यञ्जकगतासाधारण्यस्य व्यञ्जनानुपायत्वात् । व्यञ्जकस्यासाधारणस्वभावः आवश्यकः नास्ति, एतत्पुष्टीकरणायोदाहरति—

'औण्णिद्दं दोब्बल्लं चिंता अलसत्तणं सणीससि अम् ।
महु मंद भाइणीए केरं सहि ! तुह वि परिभवइ ॥'

अत्र साधारणव्यञ्जकेन व्यङ्ग्योऽभवत् । अत्र प्रकृतोपादानमुपपादयति—तथा हि 'औण्णिद्दं' इत्यादौ साधारणानामेवौन्निद्र्यादीनां वक्त्रादि वैशिष्ट्यवशादर्थविशेषव्यञ्जकताया अभ्युपगतेः ।

अत्रायमाशयः—पूर्वोक्तसन्दर्भेणैतत् सिद्धं यत् व्यञ्जकस्यासाधारणत्वं व्यङ्ग्यसद्भावस्योपायो नास्ति । किन्तु वक्तुः प्रतिपाद्यस्य वैशिष्ट्यमेव तस्य नियामकः ।

अत्र पुनः शङ्का जागर्त्ति यत्—सर्वत्रासाधारण्यव्यञ्जकस्योपयोगी भवेन्न वा भवेत् परञ्च स्थलविशेषे यदि चेत् व्यञ्जकासाधारणो भवेत्तदा तत्प्रतिपादनमसङ्गतं कथं भविष्यति ? एतदरुचिं मनसि निधाय ग्रन्थकारः दोषान्तरस्योल्लेखं करोति । प्रत्युतेत्यादिकथनस्य तात्पर्यमिदमस्ति यत्—क्वापि असाधारण्यव्यञ्जनस्योपयोगी नैव भवितुमर्हति; अपि तु प्रतिकूल एव भविष्यति । यतोऽसाधारण्यस्य व्यञ्जकार्थस्य व्यङ्ग्योऽर्थमात्रेण सम्बन्धस्थापनं व्याप्तिरूप एव भविष्यति, तदा पुनः तया व्याप्त्या विशिष्टव्यञ्जकरूपहेतुना व्यङ्ग्यस्यानुमान एव भविष्यति; व्यञ्जनं नैव । अत्रायं सारांशः—

इति स्वीकारे व्यञ्जनावृत्त्याः उच्छेद एव भविष्यति, यत् व्यञ्जनावादिनं दीक्षितमपि नाभिमतम् ।

साम्प्रतं व्यञ्जकासाधारण्यं भिन्नप्रकारेण ग्रन्थकारः निराकरोति—

'अथ तटादिघटितत्वेऽपि न निश्शेषेत्यादिवाक्यार्थानामसाधारण्यम्, सलिलार्द्रवसनकरणप्रोञ्छनादिनाऽपि तत्सम्भवादिति चेत्—तर्हि वापीस्नान-व्यावर्तनेन कः पुरुषार्थः ? एकत्रानैकान्तिकत्वस्येव बहुष्वनैकान्तिकताया अपि ज्ञाताया अनुमितिप्रतिकूलत्वात् व्यक्त्यप्रतिकूलत्वाच्च ।'

निष्कर्षः—इत्थं च यथाऽनेकेषु स्थलेषु, तथा कुत्रचिदेकत्रापि स्थले दृष्टोऽपि व्यभिचारोऽनुमितेः प्रतिबन्धक इतीह हेतोर्व्यभिचारितया त्वन्मते व्यङ्ग्य-बोधविरह एवापद्येत। मन्मते तु वैयञ्जनिकबोधे हेतुसाधारण्यस्याप्रति-बन्धकत्वान्न क्षतिरिति तात्पर्यम् ।

**( १३ ) प्रश्नः—तृतीयकाव्यस्य लक्षणं व्याख्याय समुचितोदाहरणे सङ्गमयन्तु ।**

( सं० विश्व० १९८७ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराज-जगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने काव्यभेदनिरूपणप्रकरणात् सन्दर्भितोऽस्ति। तत्र तद्भेदाश्चतुर्धा विभक्ताः सन्ति। ते च—उत्तमोत्तम-उत्तम-मध्यम-अधमभेदैः ख्याताः सन्ति। तेषु तृतीयप्रकारस्य मध्यमकाव्यस्य लक्षणोदाहरणे यथा—

'यत्र व्यङ्ग्यचमत्कारासमानाधिकरणो वाच्यचमत्कारस्तत् तृतीयम्। अत्रायं भावः—यत्र वाच्यार्थस्य चमत्कारः व्यङ्ग्यार्थस्य चमत्काराधिकरणे न स्यात्—अर्थात् यस्मिन् काव्ये व्यङ्ग्यार्थस्य चमत्कारः लघ्वंशे स्थितोऽपि व्यापकवाच्यार्थस्य चमत्कारेऽन्तर्भुक्तत्वात् स्पष्टतयाऽनुभूतो न भवेत्, तत् तृतीयं मध्यमं काव्यं कथ्यते ।

अस्य तृतीयप्रकारस्य मध्यमकाव्यस्योदाहरणं यथा। यमुनावर्णने—

'तनयमैनाकगवेषणलम्बीकृतजलधिजठरप्रविष्ट - हिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी' इति ।

अस्मिन् उदाहरणे सङ्घटनसद्भावमाह। ग्रन्थकारः—

'अत्रोत्प्रेक्षा वाच्यैव चमत्कृतिहेतुः। श्वैत्य-पातालतलचुम्बित्वादीनां चमत्कारो लेशतया सन्नप्युत्प्रेक्षाचमत्कृतिजठरनिलीनो नागरिकेतरनायिका-कल्पितकाश्मीरद्रवाङ्गरागनिगीर्णो निजाङ्गगौरिमेव प्रतीयते ।'

अत्रायमाशयः—क्यङ्प्रत्ययप्रयोगात् वाच्योत्प्रेक्षैव चमत्कारस्य कारणमस्ति। अत्रोत्प्रेक्षा शुद्धा नापि तु उपमोपक्रमोत्प्रेक्षा विद्यते। एतद् ध्यातव्यं यत् 'क्यङ्'प्रत्ययः सदृशे आचारार्थे व्याकरणानुशिष्टोऽस्ति। अत आदौ—उपमायाः प्रतीतिर्भवति पश्चान्ते सम्भावनाया एव प्रतीतिः स्थिरा भवति। यद्यप्यत्र गद्यांशे गङ्गायां कृतहिमालय-भुजोत्प्रेक्षया गङ्गायाः श्वेतता पुत्रं मैनाकञ्चान्वेषणाय समुद्रमध्ये स्थिता, अनया उक्त्या गङ्गायाः पातालतलप्रवेशः व्यङ्ग्याः भवन्ति, ये च कस्मिन्नप्यंशे चमत्कारजनकोऽप्यस्ति, तथापि सः चमत्कारः वाच्योत्प्रेक्षायाश्चमत्कारेऽन्तर्निलीनोऽस्ति। यथा—कस्याश्चिद् ग्राम्यनायिकायाः गौरवर्णता केशर-रसलेपाभ्यन्तरे निलीमा भवति। कथनस्याभिप्रायोऽयं वर्तते यत् वाच्योत्प्रेक्षायाः प्रतीत्या सम्भूतश्चमत्कारः स्पष्टः प्रदीप्तश्च। तदग्रतः उक्तव्यङ्ग्यस्य प्रतीत्या सम्भावितश्चमत्कारोऽस्पष्टो विद्यते, क्षीणोऽस्ति। अतः प्रस्तुतमिदमुदाहरणं मध्यमकाव्यस्य समुचितमेव। मध्यमनामके काव्ये व्यङ्ग्यस्यासद्भावोऽभीष्टो न वेति जिज्ञासायामाह—

'न तादृशोऽस्ति कोऽपि वाच्यार्थो यो मनागनामृष्ट प्रतीयमान एव स्वतो रमणीयतामाधातुं प्रभवति'। अत्रायं भावः—

अस्मिन् मध्यमनामकस्य काव्यस्य तृतीयभेदे व्यङ्ग्यस्य सर्वथा सद्भावोऽभीष्टो नास्ति, यतः कोऽपि वाच्यार्थः एतादृशः अस्त्येव नहि, यः स्वल्पेनापि व्यङ्ग्यार्थेन विना सम्बन्धे स्थापिते स्वयं चमत्कारमुत्पादयेत्। निष्कर्षश्चात्र—वाच्यार्थं चमत्कृत्यै नितान्तमिदमावश्यकमस्ति तत्सम्बन्धः केनापि व्यङ्ग्येन सह भूयात्। पुनः यद्यस्मिन् तृतीयभेदे व्यङ्ग्यस्य सर्वथा स्थितिरेवाभीष्टा भवेत्, तदा त्वसम्भव एव भविष्यति। न कस्याप्येकस्य लक्ष्यस्य प्राप्तिर्भविष्यति।

नन्वत्रैका नवीना शङ्का वर्तते यत्—अलङ्कारप्रधानानि काव्यानि प्रस्तुतेषु काव्यप्रभेदेषु क्वान्तर्भवन्ति ? जिज्ञासासमाधानं यथा—

'अनयोरेव द्वितीय-तृतीयभेदयोर्जागरूकाजागरूकगुणीभूतव्यङ्ग्ययोः प्रविष्टं निखिलमलङ्कारप्रधानं काव्यम्।

अत्रायं निर्गलितोऽर्थः—अनयोर्द्वयोर्द्वितीय-तृतीययोरेव भेदयोर्व्यङ्ग्यो यद्यपि गुणीभूतस्तिष्ठति तथाप्येकस्मिन् ( द्वितीये ) व्यङ्ग्यः जागरूकत्वात् चमत्कारविशेषजनकत्वाच्चानुभवयोग्यो भवति, एकस्मिंश्च ( तृतीये ) व्यङ्ग्यः चमत्कारविशेषजनकत्वाभावात् अनुभवस्यायोग्यः। अतः समासोक्ति-प्रभृत्यलङ्कारेषु येषु

व्यङ्ग्यः गौणो भूत्वापि चमत्कारयुक्ताः स्युस्तैः अलङ्कारैः युक्तानां काव्यानां द्वितीयभेदे इतरेषां च तृतीयभेदेऽन्तर्भावो बोद्धव्य इति ।

( १४ ) प्रश्नः—( क ) रसगङ्गाधररीत्याऽभिनवगुप्तपादाचार्यसम्मतं रसस्वरूपं निरूपणीयम् ।

( अथवा )

( ख ) अभिनवगुप्तोक्तं रसस्वरूपं पण्डितराजदिशा प्रतिपादनीयम् ।

( सं० सं० वि० १९८४ )

( ग ) रसस्वरूपं तदभिव्यक्त्यनभिव्यक्तिप्रकारश्च प्रदर्शयत ।

( घ ) अभिनवगुप्त-मम्मटभट्टादिसम्मतं रसस्वरूपमुपपाद्य जगन्नाथ-सम्मतं रसस्वरूपं दर्शयत ।

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमाननस्य रसस्वरूपप्रसङ्गात् सन्दर्भितोऽस्ति ।

तत्र ध्वनिकाव्यस्य पञ्चविधत्वप्रतिपादने रसध्वनिः सर्वतोऽधिको रमणीयः आस्वादजनकश्च भवति; रसध्वनेश्चात्मा रसः तन्निरूपणमादावावश्यकमिति कृत्वा प्रथममाचार्याभिनवगुप्तादिसम्मतं रसस्वरूपमाह ग्रन्थकारः । तद्यथा—

'समुचित-ललित-सन्निवेशचारुणा काव्येन समर्पितैः, सहृदयहृदयं प्रविष्टैः, तदीयसहृदयतासहकृतेन, भावनाविशेषमहिम्ना, विगलितदुष्यन्तरमणीयत्वादि-भिरलौकिकविभावानुभावव्यभिचारिशब्दव्यपदेश्यैः, शकुन्तलादिभिरालम्बन-कारणैः, चन्द्रिकादिभिरुद्दीपनकारणैः, अश्रुपातादिभिः कार्यैः, चिन्तादिभिः सह-कारिभिश्च, सम्भूय प्रादुर्भावितेनालौकिकेन व्यापारेण, तत्काल-निर्वतिता-नन्दांशावरणाज्ञानेनात एव प्रमुष्टपारिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा, स्वप्रकाशतया वास्तवेन, निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्ट-वासनारूपो रत्यादिरेव रसः ।

अत्रायमभिप्रायोऽस्ति यत्—स्वजीवने मानवो बहुविधभावानामनुभवं करोति । ते हि भावाः कदाचित् प्रीतिरूपेण, कदाचित् कस्यचिच्चिन्तया, कदाचित् क्रोधेन, कदाचिच्च घृणया प्रादुर्भवन्ति । अनुभवास्तु नश्यन्ति परञ्च मनुष्याणां हृदि तेषां संस्काराः स्थिरीभवन्ति, ते सर्वे भावाः मानवानां हृदि सदा वसन्ति । त एव वासनारूपेण मानवहृत्सु वसन्तो भावाः साहित्यशास्त्रे रत्यादिनामभिः स्थायीभावाः भवन्ति । यदा एते स्थायीभावाः 'सत्यं विज्ञान-

मानन्दं ब्रह्म' इति वेदवाक्यानुसारेण सत्यविज्ञानरूपाभ्यां स्वतः प्रकाशमानेनात्मानन्देन सहानुभूताः भवन्ति। तदा ते ( स्थायीभावाः ) एव 'रस'संज्ञां धारयन्ति। तदवस्थायामेव 'रसोऽहम्' इत्येतादृशी प्रतीतिर्भवति। परञ्च तान् स्थायीभावान् आत्मानन्दस्य सम्पर्कस्तदा पर्यन्तं न भविष्यति, न चापि तैः सह तेषामनुभवोऽपि तावत् न भविष्यति, यावत् आनन्दस्वरूपे आत्मनि यदज्ञानस्यावरणमावृतं तिष्ठति तच्च यावन्नोपसर्पति। अतस्तदावरणं निःस्सारणायैकस्यालौकिकस्य व्यापारस्य सृष्टिर्भवति। यस्य व्यापारस्य संज्ञा अस्ति 'भावकत्वम्'। यदा स लोकोत्तरो व्यापारः आनन्दस्वरूपमात्मानमावरकं तदज्ञानावरणम् अपसारयति तदाऽनुभवकर्तरि या अल्पज्ञता तिष्ठति, स च स्वल्पपदार्थानामेव ज्ञाता भवति—न च संसारस्य समस्तानां पदार्थानाम्, स च नश्यति। अर्थात् मनुष्ये ये जीवधर्माः तिष्ठन्ति, ते लुप्ताः भवन्ति, परमात्मधर्मसर्वज्ञत्वादयश्च जागृताः भवन्ति। तदा तदनुभवकर्तारमात्मानन्देन सह रत्यादिस्थायीभावानामनुभवो भवति। तस्य लोकोत्तर-भावकत्वव्यापारस्य सृष्टिः विभावानुभावसञ्चारीभावाः परस्परं मिलित्वा कुर्वन्ति।

कारण-कार्य-सहकारिणः ये सन्ति त एव विभावानुभावव्यभिचारिभावाः कथ्यन्ते। अस्मै अलौकिकीकरणाय विश्वनाथप्रभृतिभिः आचार्यैः काव्ये 'साधारणीकृति'नामको व्यापारः स्वीकृतः। तथाहि—

'व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः।'

एभिरलौकिकैर्विभावानुभावव्यभिचारिभिः उत्पादितेन भावकत्वव्यापारेण अज्ञान-रूपावरणस्य भङ्गे विहिते सति पूर्वोक्तप्रक्रियानुसारं वासनारूपे पूर्वतः हृदि स्थितेन भोजकत्व-रसना—किंवा व्यञ्जनानामकेन व्यापारेणास्वाद्यमानः रत्यादि-स्थायीभावो रसः।

उक्तप्रयोजनस्य प्रामाणिकत्वनिदर्शनाय काव्यप्रकाशे मम्मटभट्टा अपि आहुः—

'व्यक्तः सतैर्विभावाद्यैः स्थायीभावो रसः स्मृतः।'

इत्थं रसगङ्गाधरकार-पण्डितराजरीत्या 'अभिनवगुप्तपादाचार्य-सम्मतं रसस्वरूपस्य प्रथमं मतं निरूपितं मयेति शेषः।

( १५ ) प्रश्नः—पण्डितराजेन कति रससिद्धान्ताः प्रकाशिताः? तेषां सारं सङ्क्षेपतः प्रस्तुवन्तु। ( सं० विश्व० १९८७ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने ध्वनिसामान्यभेदनिरूपणानन्तरं रसध्वनेः प्रकरणात् सम्बन्धितोऽस्ति। यतः पञ्चविधध्वनिभेदेषु रसध्वनिः सर्वतोऽधिका रमणीया भवत्यतः रसध्वनिमवलम्ब्य पण्डितराजेनैकादश रससिद्धाः प्रकाशिताः, तेन रसस्वरूपविषये सर्वमपि रसतत्त्वं सहृदयानां पाठकानामग्रतः समायातम्। तेषु रससिद्धान्तेषु—

( १ ) **प्रथमः सिद्धान्तः आचार्याभिनवगुप्तपादानाम्**; तद्यथा—'समुचितललित-सन्निवेशचारुणा काव्येन समर्पितैः, सहृदयहृदयं प्रविष्टैः तदीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना.......निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः। अत्रायमाशयः—अलौकिकैः विभावानुभावव्यभिचारिभावैः उत्पादितेन भावकत्वव्यापारेणाज्ञानरूपावरणस्य भङ्गे सति पूर्वोक्तप्रक्रियानुसारं वासनारूपेण पूर्वतः हृदिस्थितेन भोजकत्व-रसना—किंवा व्यञ्जनानामकव्यापारेणास्वाद्यः रत्यादिस्थायीभावो रसः।

( २ ) **द्वितीयः सिद्धान्तः आचार्यभट्टनायकस्य**—ताटस्थ्येन रसप्रतीतावनास्वाद्यत्वम्। आत्मगतत्वेन तु प्रत्ययो दुर्घटः। शकुन्तलाऽऽदीनां सामाजिकान् प्रत्यविभावत्वात्। भट्टनायकस्य कथनमस्ति—तटस्थभावेनार्थात् 'दुष्यन्तः' शकुन्तलाविषयको रतिमान् इत्यनेन रूपेण रसस्य प्रतीतौ तत्रास्वाद्यताचमत्कारो न भविष्यति, चमत्काराभावे रसस्य का स्थितिर्भविष्यति—इत्यादीनां विचारः।

( ३ ) **तृतीयः सिद्धान्तः नव्यानाम्**; नव्यास्तु—काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषु, व्यञ्जनाव्यापारेण दुष्यन्तादौ शकुन्तलादिरतौ गृहीतायामनन्तरं च सहृदयोल्लासितस्य..........शकुन्तलादिविषयकरत्यादिरेव रसः।

रत्यादिः प्रतिभासमानो रसत्वं लभत इति मतेऽस्मिन् न नवीनव्यापारकल्पनापेक्षेति सारम्।

( ४ ) **चतुर्थः सिद्धान्तः ( अन्यविदुषाम् )**—'परे तु—व्यञ्जना व्यापारस्यानिर्वचनीयख्यातेश्चानभ्युपगमेऽपि, प्रागुक्तदोषमहिम्ना स्वात्मनि दुष्यन्तादितादात्म्यावगाही शकुन्तलादिविषयकरत्यादिमदभेदबोधो मानसः काव्यार्थभावनाजन्या **विलक्षणविषयताशाली रसः**। अत्र सङ्क्षेपेणेदं कथनं भविष्यति यत् एकविधं भ्रमं रस इति कथयन्ति।

(५) **पञ्चमः सिद्धान्तः** (भट्टलोल्लटादीनाम्)—मुख्यतया दुष्यन्तादिगत एव रसो रत्यादिः कमनीयविभावाद्यभिनयप्रदर्शनकोविदे दुष्यन्ताद्यनुकर्तरि नटे समारोप्य, साक्षात् क्रियते इत्येके।

(६) **षष्ठः सिद्धान्तः** (तार्किक-शङ्कुकमहाशयानाम्)—'दुष्यन्तादिगतो रत्यादिर्नटे पक्षे दुष्यन्तत्वेन गृहीते, विभावादिभिः कृत्रिमैरप्यकृत्रिमतया गृहीतैः भिन्ने विषयेऽनुमितिसामग्र्या बलवत्त्वादनुमीयमानो रसः' इत्यपरे। एवं बलवत्त्वान्नटविषयकप्रत्यक्षप्रतिबन्धनादनुमीयमानो दुष्यन्ताद्यनुकार्यगतः शकुन्तलाविषयको रत्यादिरेव रसः।

(७) **सप्तमः सिद्धान्तः** (मतपञ्चके प्रथमः)—'विभावादयस्त्रयः समुदिता रसाः' इति कतिपये। केषाञ्चन कथनमस्ति—विभावानुभावसञ्चारीभावानां सम्मिलिते सति रस इति।

(८) **अष्टमः सिद्धान्तः** (बहूनां मते)—'त्रिषु य एव चमत्कारी, स एव रसः, अन्यथा तु त्रयोऽपि न' इति बहवः।

(९) **नवमः सिद्धान्तः** (अन्येषां मते)—'भाव्यमानो विभाव एव रसः' इत्यन्ये।

(१०) **दशमः सिद्धान्तः** (इतरेषां मतेन)—'अनुभावस्तथा' इतीतरे।

(११) **एकादशः सिद्धान्तः** (अनेकानां पण्डितानाम्)—'व्यभिचार्येव तथा, तथा परिणमति' इति केचित्।

एवम् एकादश रससिद्धान्तानां सङ्क्षेपतः विवरणं प्रस्तुतमिति।

(१६) **प्रश्नः**—भग्नावरणचिद्विशिष्टो रत्यादिरेव रसः इत्युक्तेराशयं प्रकाशयत। (सं० सं० विश्व० १९९०)

प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने रसनिरूपणप्रकरणात् सम्बन्धितोऽस्ति। तत्रादौ प्रथममाचार्याभिनवगुप्तादिसम्मतं रसस्वरूपमस्ति—'समुचित-ललितसन्निवेशचारुणे'त्यादिः उक्तार्थमेव प्रमाणयन् काव्यप्रकाशे मम्मटपादाः आहुः—'व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः' इति।

अत्रेयमवधारणा—व्यक्तिपदस्यार्थोऽन्यत्र व्यञ्जनावृत्तिः प्रसिद्धोऽस्ति, अतोऽत्रापि तत्पदस्यार्थो स एवार्थो भविष्यति—भ्रमनिर्मूलनार्थमाह—'व्यक्तिश्च भग्नावरणाचित्'।

अर्थात् व्यक्तिपदेनात्र तच्छुद्धास्वादनरूपं चैतन्यं विवक्षितमस्ति, येषा-मज्ञानावरणं दूरीभूतमस्ति, न तु व्यञ्जनावृत्तिः ।

उक्तार्थसमर्थने उदाहरणं यथा—

'यथा हि शरावादिना पिहितो दीपस्तन्निवृत्तौ सन्निहितान् पदार्थान् प्रकाशयति, स्वयं च प्रकाशते, एवमात्मचैतन्यं विभावादिसंवलितान् रत्यादीन्।

नन्वत्र रत्यादिस्थायीभावान् आत्मचैतन्यं प्रकाशयति; तद्यथा—

'अन्तःकरणधर्माणां साक्षिभास्यत्वाभ्युपगतेः ।'

अत्रेदं तात्पर्यम्—वेदान्तदर्शनानुसारं संसारस्य सर्वे पदार्थाः मिथ्याभूताः सन्ति, सत् केवलम्—आत्मा ( ब्रह्म ), बाह्यघट-पटादिपदार्थाः आत्मनः वृत्ति-रूपाः सन्ति । अतोऽन्तःकरणवृत्तयः साक्षिभास्यत्वं प्राप्ताः सन्ति । एवं बहुधा विचार्य प्रस्तुते विषये उपसंहारः क्रियते यत्—'इत्थं चाभिनवगुप्त-मम्मट-भट्टादिग्रन्थस्वारस्येन भग्नावरणाचिद्विशिष्टो रत्यादिः स्थायीभावो रस इति स्थितम् ।

इति प्रक्रियानुसारं यदा रसः रत्यादिस्थायीभावस्य स्वरूपभूतः, चैतन्य-स्वरूपो न, तदा तु चैतन्यं रसं चाभिन्नरूपेण प्रतिपादयित्री 'रसो वै सः' इत्यादि श्रुतिः विरुद्धा भविष्यति, अतः सिद्धान्तभूतस्य मतस्य निष्कर्षो यथा—'वस्तु-तस्तु वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणाचिदेव रसः' ।

अत्रायमाशयः—उक्तश्रुत्यनुरोधेन रत्यादिस्थायीभावाः यस्य विषयाः स्युः एतादृशमावरणमुक्तं शुद्धं चैतन्यं 'रस' इति कथनीयं न तु चैतन्यविषयीभूत रत्यादिकमित्यलं पर्यालोचितेन ।

( १७ ) **प्रश्नः**—भट्टनायकदिशा रसस्वरूपं निरूप्यताम् ।

( सं० सं० विश्व० १९८७ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गा-धरस्य प्रथमानने रसस्वरूपनिर्वचनावसरेऽभिनवगुप्ताचार्यस्य मतप्रतिपादना-नन्तरमाचार्यभट्टनायकस्य मतं विद्यते, तत्साधनाप्रकारश्च यथा—भट्ट-नायकास्तु ताटस्थ्येन रसप्रतीतावनास्वाद्यत्वम् । आत्मगतत्वेन तु प्रत्ययो दुर्घटः, शकुन्तलादीनां सामाजिकान् प्रत्यविभावत्वात् । अत्रायमाशयः—हृदय-दर्पणादिग्रन्थकर्तुः आचार्यभट्टनायकस्य कथनमस्ति यत्—तटस्थभावे ( 'दुष्यन्तः शकुन्तलाविषयकरतिमान्' इति रूपेण ) रसस्य प्रतीतौ अ

तस्मिन् आस्वाद्यता-चमत्कारो नैव भविष्यति; यदा च चमत्कृतिर्नैव भविष्यति तदा स रसो भविष्यति कथम् ? यतो हि—'रसे सारश्चमत्कारः' सिद्धान्तोऽयं सर्वसम्मतः। उदासीनभावेन शकुन्तलादिरतेः प्रतीतावपि तस्मिन् चमत्कारा-भावोऽपि समीचीनमेवास्ति। कारणञ्चात्र—'सर्वं खल्वात्मनः कामाय प्रियं भवति' इति सिद्धान्तानुसारं स्वस्मिन् प्रतीयमानायां कस्यामपि रतौ चमत्कारो भवितुमर्हति।

नन्वत्र शङ्कते यत्—विभावादिप्रतीतिं विनैव रसप्रतीतिर्भवत्विति शङ्कां निराकरोति—

'विना विभावमनालम्बनस्य रत्यादेरप्रतिपत्तेः।'

अपरञ्चान्यां शङ्कामपि निराकरोति। तद्यथा—

'न च कान्तात्वं साधारणविभावताऽवच्छेदकमत्राप्यस्तीति वाच्यम्, अप्रामाण्यनिश्चयानालिङ्गिताऽगम्यात्वप्रकारकज्ञानविरहस्य विशेष्यतासम्बन्धा-वच्छिन्नप्रतियोगिताकस्य विभावताऽवच्छेदककोटावश्यं निवेश्यत्वात्।

अत्रायं भावः—यदि भवन्तः कथयिष्यन्ति यत्—अनालम्बनरत्यादेः प्रतीति-र्नैव भविष्यति, एतत्तु सत्यं, परञ्चात्रालम्बनस्याभावो नास्ति। शकुन्तला-प्रभृतावालम्बनविभावः समुपस्थितोऽस्ति, किञ्च शकुन्तलादिः सामाजिकानां विभावो भवितुं नार्हति। एतदप्यकिञ्चित्कर एव, यतः कमपि नायकं प्रेम्णः कारणमिति कथनाय कान्तायाः सुन्दरनायिकायाः स्थितिः पर्याप्ता विद्यते; अतः शकुन्तलाद्याः नायिकाः सामाजिकानां भवितुमर्हन्ति। अस्मिन् स्थले महद्वि-वादानन्तरमिदमायातं यत्—आत्मगतत्वेन रसप्रतीतिर्न भवति, अर्थात्—'शकुन्तलाविषयकरतिमान् अहमस्मि' एतद् ज्ञानं न भविष्यति।

उक्तनिवेशाभावे दोषं दर्शयति; यथा—

अन्यथा स्वस्रादेरपि कान्तात्वादिना तत्त्वापत्तेः।

एवमेव रसान्तरेष्वपि निवेशस्यावश्यकतां प्रदर्श्यानेकविधशङ्कासमाधाना-नन्तरं पर्यन्ते सामायाति यत्—

इत्थं विकल्पान् बहुविधान् निरस्य सुस्पष्टं भट्टनायकसम्मतं रसस्वरूप-मुपन्यस्यति। यथा—

'तस्मादभिधया निवेदिताः पदार्था भावकत्वव्यापारेणागम्यात्वादिरस-विरोधिज्ञानप्रतिबन्धद्वारा कान्तात्वादिरसानुकूलधर्मपुरस्कारेणावस्थाप्यन्ते। एवं साधारणीकृतेषु दुष्यन्त-शकुन्तला-देश-काल-वयोऽवस्थादिषु पङ्क्तौ पूर्व-

व्यापारमहिमनि, तृतीयस्य भोगकृत्त्वव्यापारस्य महिम्ना निगीर्णयो रजस्तमसो-रुद्रिक्तसत्त्वजनितेन निजचित्स्वभावनिर्वृतिविश्रान्तिलक्षणेन साक्षात्कारेण विषयीकृतो भावनोपनीतः साधारणात्मा रत्यादिः स्थायीरसः।'

अत्र निष्कर्षः—तस्यैव साक्षात्कार आत्मानन्दानुभवस्य विषयीभूताः रत्यादयः 'स्थायीभावो रसः' इति कथ्यते। यं स्थायीभावं पूर्वोक्तः भावकत्व-भावनाविशेषः साधारणरूपे समुपस्थापित आसीत्। अत्रैतदपि ध्येयं यत्—सत्त्वोद्रेकात् यः आत्मानन्दः प्रकाशितो भवति, तमेव चैतन्यात्मकं ज्ञानं 'भोग' इति कथयन्ति। यस्य विषये सञ्जाते रत्यादिस्थायिभावानां संज्ञा 'रस' इति भवति। अत्रायं विशेषः—'तत्र भुज्यमानो रत्यादिः, रत्यादिभोगो वेत्युभयमेव रसः'। अपि च—सोऽयं भोगो विषयसंवलनात् ब्रह्मास्वादसविधवर्तीत्युच्यते।

अधुना विषयोपसंहरणं यथा—

एवं च त्रयोंऽशाः काव्यस्य 'अभिधा भावना चैव तद्भोगीकृतिरेव च' इत्याहुः। इत्यलं पल्लवितेनेति दिक्।

(१८) **प्रश्नः**—साधारणीकरणत्वं प्रतिपाद्य विप्रतिपत्तिनिरासपूर्वकं शान्तस्य रसत्वं साध्यताम्। (सं० सं० विश्व० १९८६)

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने रसनिरूपणप्रसङ्गात् सम्बन्धितोऽस्ति। साधारणीकरणत्वं भट्टनायकसम्मत-रसस्वरूपनिरूपणावसरे निरूपितमस्ति। तद्यथा—'तस्मादभिधया निवेदिताः पदार्था भावकत्वव्यापारेणागम्यात्वादि रसविरोधिज्ञानप्रतिबन्धद्वारा कान्तात्वादि रसानुकूलधर्मपुरस्कारेणावस्थाप्यन्ते। एवं साधारणीकृतेषु दुष्यन्त-शकुन्तला-देश-काल-वयोऽवस्थादिषु पश्चात् पूर्वव्यापारमहिमनि, तृतीयस्य भोगकृत्वव्यापारस्य महिम्ना, निगीर्णयो रजस्तमसोरुद्रिक्तसत्त्वजनितेन निजचित्स्वभावनिर्वृतिविश्रान्तिलक्षणेन साक्षात्कारेण विषयीकृतो भावनोपनीतः साधारणात्मा रत्यादि स्थायीरसः'।

अत्रायमाशयः—श्रव्यकाव्येऽभिधया दृश्यकाव्ये च चक्षुरिन्द्रियेण प्राक् शकुन्तलादिपदार्थानां बोधो भवति; पश्चाच्च काव्ये स्थितेन भावकत्वव्यापारेण शकुन्तलादिविषये—'अगम्या इयम्' इति रसविरुद्धं ज्ञानं भवति स्म तन्निरुध्यते तथा च कान्तात्वादि रसोपयोगिधर्मेण सह तेषां पदार्थानामुपस्थापनं कार्यते? क्रियते? अनेन प्रकारेण सः भावकत्वव्यापारः शकुन्तला-दुष्यन्त-

देश-काल-वयः-संयोग-वियोगाद्याः दशाः सर्वान् साधारणीकरोति, अर्थात्तेषु कस्यापि प्रकारस्य वैशिष्ट्यं न स्यात् येन रसोद्बोधे बाधा न स्यात् । अलमिति, इयत् कार्यं कृत्वा स व्यापारो विरतो भवति । एतदनन्तरं—भोगकृत्व-भोजकत्व-नामकेन तृतीयेन काव्यव्यापारेण रजोगुण-तमोगुणौ च निगीर्णौ भवतः, सत्त्वगुणश्च उद्रिक्त प्रवृद्धो भवति, येन वयं ( सामाजिकाः ) सांसारिक-समस्तविषयेभ्यः मुक्तिं प्राप्य स्वचैतन्यस्वरूपस्यात्मानन्दस्य साक्षात्कारं कुर्मः । तस्यैव साक्षात्कारः आत्मानुभवस्य विषयीभूताः रत्यादयो स्थायी-भावाः 'रस' इति कथ्यते । सोऽयं स्थायीभावः यं पूर्वोक्तः 'भावकत्वभावना-विशेषः' साधारणरूपे उपस्थापितः । अत्रैतदपि ज्ञातव्यं यत् सत्त्वगुणस्योद्रेकेण य आत्मानन्दः प्रकाशितो भवति, तमेव चैतन्यात्मकं ज्ञानं 'भोग' इति कथयन्ति । यस्य विषये सञ्जाते रत्यादि स्थायीभावानां संज्ञा रसो भवति ।

इत्थं पर्यवसितं भवति यत् काव्यस्य त्रयः अंशाः भवन्ति, अर्थात् काव्ये त्रयो व्यापारास्तिष्ठन्ति—एका ( प्रथमा ) अभिधा, यया प्रथमं काव्यार्थज्ञानं भवति । अत्राभिधापदं दृश्य-श्रव्यकाव्यानुरोधेन लक्षणायास्तथा इन्द्रियसन्नि-कर्षाणामपि उपलक्षणं भवति ।

काव्यस्य द्वितीयोंऽशः काव्यस्यास्ति भावना भावकत्वं वा, येन शकुन्तला-दीनां **साधारणीकरणत्वं** भवति । तृतीयश्चांशः भोगी-कृति-भोगकृत्वोऽथवा भोजकत्वम्, येन रत्यादीनां रसरूपे आस्वादो भवति । साधारणीकरणत्व-स्यायं विषयः पर्यवसितः । **शान्तरसस्य रसत्वम्** ।

अत्रैव रसगङ्गाधरे नवरसानां गणनापूर्वकं निरूपणानन्तरमेषः प्रश्नः समायाति यत्—नाट्ये शान्तरसस्याभावमाशङ्कमानाः केचित्तु शङ्कन्ते—

'शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात् ।
अष्टावेव रसा नाट्ये, न शान्तस्तत्र युज्यते ॥'

अत्रायमाशयः—नाटके शान्तरसः न भवितुमर्हति, इत्येषा परकीया शङ्का विद्यते तत्स्वरूपं यथा—केचित्त्वित्यादिना—अष्टावेव रसाः भवन्ति नाटके, न च शान्तः । ते कथयन्ति यत् शान्तरसस्य सिद्धिः शमेन ( शान्त्या ) एव भवितुमर्हति ।

अपरञ्च—शान्तो रसः वैराग्येण सम्पृक्तो भवति, नटश्च सांसारिकः, अत-स्तत्र शान्तेः सम्भावना नैव । तदा नाटके शान्तरसः कथं सम्भवेत् । अत्र समाधानं यथा ( पण्डितराजमतेन ); तथाहि—

'तच्चापरे न क्षमन्ते। तथा हि नटे शमाभावादिति हेतुरसङ्गतः, नटे रसाभिव्यक्तेरस्वीकारात्। सामाजिकानां शमवत्वेन तत्र रसोद्बोधे बाधकाभावात्।

अत्रान्यदपि प्रमाणं विलसति। तत्प्रमाणं प्राचीनानां यथा सङ्गीतरत्नाकरे—

'अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्।
तदचारु यतः कञ्चिन्न रसं स्वदते नटः ॥'

इत्यादिना प्रमाणेन नाट्येऽपि शान्तो रसोऽस्तीति व्यवस्थापितम्।

(१९) प्रश्नः (क) नाट्ये शान्तो रसः सम्भवति न वेति प्राचीनाचार्यरीत्योपपाद्य पण्डितराजमतं प्रदर्शनीयम्। (सं० सं० वि० १९८४)

(ख) शान्तस्य नवमरसत्वमाक्षेपसमाधानपूर्वकं व्यवस्थापयत।

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमाननस्य रसनिरूपणप्रसङ्गात् सम्बन्धितोऽस्ति। तत्र रसस्वरूपनिरूपणानन्तरं नवरसानामेव नामनिर्देशपूर्वकं विवरणमस्ति। तद्यथा—

'शृङ्गारः करुणः शान्तो रौद्रो वीरोद्भुतस्तथा।
हास्यो भयानकश्चैव वीभत्सश्चेति ते नव ॥'

एषां नवरसानामस्तित्वविषये भरतमुनिवचनमपि प्रमाणं विद्यते। परञ्च केचन विद्वांस इति कल्पयन्ति यत् अष्टावेव रसाः भवन्ति; शान्तस्य ग्रहणं तत्र नोचितमिति। तत्कारणं कथयन्ति; तद्यथा—

'शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात्।
अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते ॥'

अत्रायमभिप्रायः—नाटके शान्तरसस्यास्तित्वं न भविष्यति, इति हेतुर्भवता दत्तः यत्—नटे शान्तेः सम्भावना नास्ति, सा चासङ्गता। यतो हि वयं नटे रसस्याभिव्यक्तिर्न स्वीकुर्मः, तेन च पुनः किं प्रयोजनम्? यत्र वयं रसस्याभिव्यक्तिः स्वीकुर्मः तदा ते सामाजिकाः यदि शान्तियुक्ताः भविष्यन्ति तदा तेषु रसाद् बोधो भविष्यत्येव। तत्र तस्य स्थितौ कापि बाधा नास्ति। यदि भवन्तः कथयिष्यन्ति यत् शान्तिविहीनो नटः शान्तरसस्याभिनयान् न प्रकाशयिष्यति तदा वयं कथयिष्यामः यत् नटः भयानकस्याथवा रौद्ररसस्याभिव्यक्त्यै अभिनयं करोति। इति तु भवन्तोऽपि स्वीकुर्वन्ति। परञ्च भवतः शान्तरसविषयकस्यास्य नूतनस्य तर्कस्यानुसारं सोऽप्यसङ्गतो भविष्यति, यतो हि नटे यथा वास्तविकी शान्तिर्न तिष्ठति तेनैव प्रकारेण वास्तविकौ भयक्रोधौ

व न तिष्ठतः। अतोऽनेन कारणेन यदि चेत् शान्तिरसस्याभिनयकरणे सोऽधिकारी न भवति तदा भयानकरौद्ररसयोश्चाभिनयस्याधिकारित्वमपि तस्मै उचितप्राप्तमस्ति।

अनेनैव प्रकारेण शान्तरसस्थापनविपक्षे अनेकाः शङ्का उत्पद्यन्ते। ग्रन्थकारस्तान् निर्मूलयति। उक्तार्थे प्राचीनसम्मतिं दर्शयन् निगमयति। यथोक्तं सङ्गीतरत्नाकरे अन्तिमाध्याये; तद्यथा—

'अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्।
तदचारु, यतः कञ्चिन्न रसं स्वदते नटः॥'

अत्रायमभिप्रायः—यतः तानि गीत-वाद्यादीनि शान्तरसस्य विरोधिनः न सन्ति, नाटकेऽपि च शान्तरसस्य स्थितिः समुचिता, अतः सङ्गीतरत्नाकरस्यान्तिमाध्याये—'अष्टावेव रसा नाट्ये' इत्यादि अर्थात्—नाटकेषु अष्टावेव रसाः सन्ति, इति कथयन्ति तन्नोचितं कथनमिति।

यतो हि नटः कस्यापि रसस्यास्वादनं न करोति, इत्यादि प्रमाणेन नाटकेष्वपि शान्तरसो भवति। एतत्सिद्धम्।

नाटकेषु शान्तरसस्वीकृतावपि काव्ये तस्य स्वीकृतिः आवश्यकी। अत्रायमाशयोऽस्ति यत् ये नाटकेषु शान्तरसं न स्वीकुर्वन्ति तैरपि काव्येषु शान्तरसः स्वीकर्त्तव्यः, तत्र कापि बाधाऽपि न विद्यते, महाभारतादिग्रन्थेष्वपि शान्तरसस्यैव प्राधान्यमस्ति। एतत्सर्वं सर्वे जानन्ति।

अत एव मम्मटभट्टैरपि 'नाटकेषु अष्टौ रसाः भवन्ति' कथयित्वा अनन्तरं 'शान्तनामकः एकः नवमरसोऽप्यस्ति' इत्यपि कथितम्। काव्येषु शान्तरसस्य स्वीकृतिः मम्मटभट्टैरपि प्रदत्तेत्यतो रसानां सङ्ख्या नवैवेति सिद्धम्।

( २० ) **प्रश्नः**—'वागर्थाविव सम्पृक्तावि'त्यत्र न रसध्वनिरिति जगन्नाथपक्षं दीक्षितपक्षं प्रतिक्षिप्य समर्थयत। (सं० सं० विश्व० १९७६)

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने शृङ्गाररसविवेचनप्रसङ्गात् सम्बन्धितोऽस्ति। तत्र शृङ्गारस्य द्वौ भेदौ—संयोगो विप्रलम्भश्च। संयोगः=सम्भोगः। संयोगशृङ्गारस्योदाहरणं 'शयिता सविधेऽप्यनीश्वरा' इत्यादावस्ति। सम्प्रत्येतद्विचारावसरेऽप्पयदीक्षितदर्शितं सम्भोगशृङ्गारध्वनेरुदाहरणं दूषयति पण्डितराजः। तद्यथा—

"यत्तु चित्रमीमांसायाम्—'वागर्थाविव सम्पृक्तौ' इत्यत्र रसध्वनिः, निरति-

शयप्रेमशालिताव्यञ्जनात् इति, तद् ध्वनिमार्गानाकलननिबन्धनम्, पार्वती-परमेश्वरविषयककविरतौ प्रधाने निरतिशयप्रेम्णो गुणीभावात् ।''

अत्रायमाशयः—चित्रमीमांसायां स्वकीये ग्रन्थे श्रीमताऽप्पयदीक्षितेन प्रतिपादितं यत्—'वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये । जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ' ॥ रघुवंशे महाकविकालिदासकृतेऽस्मिन् मङ्गलाचरणश्लोके शृङ्गाररसस्य ध्वनिर्वर्तते, यतोऽत्र 'वागर्थाविव सम्पृक्तौ' अर्थात्—'शब्दार्थयोरिव सदा संश्लिष्टौ' इत्यनयोपमया शिवपार्वत्योर्निरतिशयं प्रेम ध्वनितं भवति। एवम्भूतोऽसौ ध्वनिमार्गोऽज्ञानमूलकोऽस्ति । कारणञ्चास्मिन् श्लोके पार्वती-परमेश्वरयोश्च विषये कवेः या रतिः, या भाव इति कथ्यते, स भावः प्रधानः । शिव-पार्वत्योश्च परस्परं प्रेम व्यज्यमानमपि तस्याः ( कविनिष्ठायाः रतेः ) अपेक्षया गौणमस्ति ।

एतत्समर्थने पुनरप्याह—'नहि गुणीभूतस्य रत्यादे रसध्वनिव्यपदेश-हेतुत्वं युक्तम्, 'भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः' इति सिद्धान्तात् ।

अस्याः कारिकायाः पूर्वांशः काव्यप्रकाशे विद्यते यत्—'रसभावतदाभास-भावशान्त्यादिरक्रमः' इति ।

अत्रायं विमर्शः—ग्रन्थकाराशयेन गौणरत्यादिः 'अत्र रसध्वनिरस्ति' अस्य व्यवहारस्य हेतुर्न भवितुमर्हति; आशयोऽयमत्र—गौणरत्यादिः रसध्वनिर्न भवति, अत्र कारणं सुस्पष्टमस्ति । अत्रायं सिद्धान्तः वरीवर्ति—'भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः' । अभिप्रायोऽयमत्रास्ति यत्—अप्रधानाः रसादयः अलङ्कारा भवन्ति, न तु ध्वनयः । अतः उक्तोदाहरणे—शृङ्गाररसः व्यङ्ग्यो भूत्वाऽपि अलङ्कार इत्यभिधीयते । येन शिव-पार्वतीविषयककवि-निष्ठभावोऽलङ्कृतो भवति । फलतः पद्यमिदं भावध्वनेरुदाहरणं भवितुमर्हति, न तु रसध्वनेः ।

( २१ ) प्रश्नः—वीरः कतिविधः ? पाण्डित्यवीरस्वीकारे का वाचोयुक्तिरिति प्रतिपादयत । ( सं० सं० वि० १९९० )

प्रस्तुतोऽयं प्रश्नः—पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने रौद्ररसनिरूपणानन्तरं वीररसनिरूपणप्रसङ्गात् सम्बन्धितोऽस्ति । प्रथमं तावत् वीरः कतिविधः ? इति जिज्ञासायामाह ग्रन्थकारः—'वीरश्चतुर्धा— दान-दया-युद्ध-धर्मैस्तदुपाधेरुत्साहस्य चतुर्विधत्वात्' ।

अत्रायमाशयः—वीररसस्य चत्वारो भेदाः भवन्ति, यतो हि वीररसस्य यायीभावः उत्साहः—दान-दया-युद्ध-धर्मरूपभेदैश्चतुर्विधोऽस्ति।

नन्वत्र प्रश्नाकृतिर्वर्तते यत् 'पाण्डित्यवीरस्वीकारे का वाचोयुक्तिरि'ति। तत्समाधानं यथा—वस्तुतः शृङ्गारस्येव वीररसस्याप्यनेके भेदाः भवितु-र्हन्ति।

अवलोकयन्तु भवन्तः—यदि ( चेत् ) पूर्वोक्तं 'सपदि विलयमेतु' इत्यादि यं 'मम तु मतिर्न मनागपैति सत्यात्' अनेन प्रकारेण चतुर्थपादं परिवर्त्य ान्तररूपे परिवर्तनं स्यात्, तदा सत्यवीरोऽप्येकभेदो भविष्यति।

अथवा शङ्कते—'न च सत्यस्यापि धर्मान्तर्गततया धर्मवीररस एव तद्वीर-ाप्यन्तर्भाव इति वाच्यम्।

अस्य समाधानं यथा—'दानदययोरपि तदन्तर्गततया तद्वीरयोरपि धर्म-रात् पृथग्गणनानौचित्यात्'।

अत्रायम्भावः—दानवीर-दयावीरावपि धर्मवीरस्यान्तर्गतावेव, पुनः तयोः ानैवानुचिता वर्तते, फलतः वैयर्थ्यं भजतस्तौ। इत्येव नहि—'एवं पाण्डित्य-रोऽपि प्रतीयते'।

अस्योदाहरणं यथा—

'अपि वक्ति गिराम्पतिः स्वयं, यदि तासामधिदेवताऽपि वा।
अयमस्मि पुरो हयाननस्मरणोल्लङ्घितवाङ्मयाम्बुधिः॥'

अस्मिन् पद्ये—हयग्रीवोपासनया लब्धसिद्धिः कोऽपि विपश्चिद् विद्वत्-ायामुपविश्य कथयति—यदि स्वयं बृहस्पतिः किंवा वागधिष्ठात्री साक्षात् स्वती वदतु, तथापि हयग्रीवस्मरणेन समस्त-वाङ्मयाब्धिपारदर्श्यय-मस्मि—अग्रतः, अपि चाहं बृहस्पति-सरस्वत्योः सकाशादपि न बिभेमि तदा ायामुपस्थितानां भवादृशानां पण्डितानां का कथा? येभ्यः रोचते शास्त्रार्थः, ास्त्रार्थविचारं कुर्वन्त्विति। अस्मिन् पद्ये—'बृहस्पत्याद्यालम्बनः सभादि-ोद्दीपितो निखिलविद्वत्तिरस्कारानुभावितो गर्वेण सञ्चारिणा पोषित उत्साहो ः प्रतीयते। ननु चात्र युद्धवीरत्वम्, युद्धत्वस्य वादसाधारणस्य वाच्यत्वा-ा चेत्'।

( २२ ) प्रश्नः—'न कपोत भवन्तमण्वपि' इति पद्यस्य 'न कपोत-ातक तवे'ति पाठान्तरकल्पने किं बीजमिति प्रदर्श्य कस्य ध्वनेरुदा-गमिदमिति समर्थ्यताम्। ( सं० सं० विश्व० १९८७ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्
प्रथमानने निरूपितस्य वीररसस्य प्रकरणात् सम्बन्धितोऽस्ति । तत्र वीरश्चतु
वर्णितः दान-दया-युद्ध-धर्मभेदैः । एषु द्वितीयस्य दयावीररसस्य ध्वनेरुदाहरण
मस्ति—द्वितीयो यथेति—

'न कपोत ! भवन्तमण्वपि, स्पृशतु श्येनसमुद्भवं भयम् ।
इदमद्य मया तृणीकृतं, भवदायुः कुशलं कलेवरम् ॥'

अस्मिन् पद्ये—'राजाशिविः शरणापन्नं कपोतरूपं धर्मं वक्ति' इत्येतस्
वर्णनं विद्यते ।

तथा चात्र—दयाविषयकशिविवृत्तिरुत्साहः स्थायी, कपोत आलम्बनम्
तदीयं व्याकुलत्वमुद्दीपनम्, शरीरार्पणमनुभावः, धृत्यादयश्च व्यभिचारि
सम्भूय दयावीररसमास्वादपदवीं नयन्ति ।

नन्वत्र—कपोतापेक्षया श्येनं प्रत्युक्त्या भूयो भयनिवृत्तेः सम्भवात् पाठान्
कल्पयति । अतः ग्रन्थकारः प्रोवाच—'अथवैवं विन्यासः' । शिविः इ
ब्रूते ( पाठान्तरं यथा )—

'न कपोतकपोतकं तव, स्पृशतु श्येन ! मनागपि स्पृहा ।
इदमद्य मया समर्पितं भवते चारुतरं कलेवरम् ॥'

अत्रायमाशयः—प्रस्तुतेऽस्मिन् प्रथमे पद्ये कपोतशिशुं निर्भयाचरणायाश्
सनं दीयते, द्वितीये च पद्ये श्येनं कपोत-पोतकस्य ( शिशोः ) हननिषेध
सम्मतिः प्रदत्ताऽस्ति । या सम्मतिः उक्ताश्वासनापेक्षयाऽधिका सङ्गताऽस्
अतः ग्रन्थकारेण प्रथमपद्यं द्वितीयपद्ये परिवर्तनमावश्यकं स्वीकृतम् । अ
श्लोकार्थस्याधारः एका पौराणिकी कथा वर्तते—राज्ञः शिवेः दयालुता
ख्यातिः महती आसीत् । इन्द्रेण तद्दयालुतायाः परीक्षणार्थमिच्छा कृत
अतः इन्द्रः स्वयं श्येनो जातः, धर्मं च कपोतः रचितः । पुनः तच्छ्येन
भिद्रुतो भूय तत्कपोतेन राज्ञः शिवेः शरणं गृहीतम्, शिविना च स्वशरीरमर्पयि
श्येनात् कपोतरक्षा विहिता ।

अत्र ( द्वितीयपद्ये ) सङ्गतिर्यथा—

एषा शिवेः कपोतं श्येनं प्रति चोक्तिः । अत्र कपोत आलम्बनम्, तस
व्याकुलीभवनमुद्दीपनम्, तस्य कृते स्वकलेवरार्पणमनुभावः ।

अत्रेयं शङ्का जागर्ति यत्—अत्र दानवीरध्वनित्वं कथं न ? इमां श
निराकरोति ( दूरीकरोति ) ग्रन्थकारः । तद्यथा—

न चात्र शरीरदानप्रत्ययाद् दानवीरध्वनित्वापत्तिरिति वाच्यम्, श्येन-कपोतयोर्भक्ष्य-भक्षकभावापन्नत्वेन शिवि-शरीरस्यार्थिनोऽभावात् तदप्रतिपत्तेः।

अत्रेयमवधारणा—शरीरदानस्य प्रतीतिर्भवति, अतः पद्यमिदं दानवीर-ध्वनेः एवोदाहरणमस्ति, एतादृशी शङ्का मनसि न विधेया, यतः श्येनस्य खाद्यः ( भक्ष्यः ) कपोतः, अतः सः श्येनः कपोतस्य याचको भवितुमर्हति, राज्ञः शरीरस्य न; यस्य वस्तुनश्च याचकः यत्र न भवेत् तत्र तद्वस्तुनः दानं कथमिति सम्भवः, अतोऽत्र दानस्य प्रतीतिर्भवत्येव नहि। यतः कस्यापि वस्तुनः परि-वर्तने यद्वस्तु दीयते तद्विनिमय इत्युच्यते; न तु दानमिति। अनेन प्रकारेण दयावीररसध्वनेरुदाहरणमिदं निर्विवादमिति।

( २३ ) प्रश्नः—'चित्रं महानेष नवावतारः' इत्यत्र कस्य ध्वनेः प्राधान्यमिति समालोच्यताम्। ( सं० सं० विश्व० १९८७ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमाननेऽद्भुतरसध्वनिप्रकरणात् सन्दर्भितोऽस्ति। उपर्युक्तं पद्यमयमुदाहरण-मिदं काव्यप्रकाशकृताऽऽचार्यमम्मटेनाद्भुतरसध्वनेरुदाहरणं दत्तमस्ति, तत्खण्ड-नाय पण्डितराजः समुत्सुको भवति। तद्दूषणं यथा—यत्तु सहृदयशिरोमणिभिः प्राचीनैरुदाहृतम्—

'चित्रं महानेष नवावतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः।
लोकोत्तरं धैर्यमहो ! प्रभावः काप्याकृतिर्नूतन एष सर्गः॥'

पद्येऽस्मिन् भगवतो वामनस्य दर्शनेन विस्मितस्य बलेरुक्तिरस्ति। इह विस्मयस्य प्राधान्येन व्यङ्ग्यतयाऽद्भुतरसध्वनिरिति भट्टमम्मटः। एतत् पण्डित-राजाय न रोचते। अतस्तन्मतं खण्डयति; यथा—

'तत्रेदं वक्तव्यम्—प्रतीयतां नामात्र विस्मयः, परन्त्वसौ कथङ्कारं ध्वनि-व्यपदेशहेतुः ? प्रतिपाद्यमहापुरुषविशेषविषयायाः प्रधानीभूतायाः स्तोतृगत-भक्तेः प्रकर्षकत्वेनास्य गुणीभूतत्वात्।'

अत्रायमभिप्रायो विद्यते यदस्मिन् पद्ये 'विस्मय'नामकस्य स्थायीभावस्य प्रतीतिर्भवति, भवतु तन्नाम। तस्याहमपलापं न चिकीर्षामि, परञ्च तेन विस्मयकारणेनात्राद्भुतरसध्वनेः व्यवहारः कथं भविष्यति, यतः अस्मिन् श्लोके यस्य महापुरुषस्य वर्णनं कृतमस्ति, तद्विषये स्तुतिकर्तुः या भक्तिरस्ति सैवात्र प्रधानभूता, विस्मयश्चोत्कर्षं ददाति। अतस्तदपेक्षया गौणः।

सम्प्रत्युदाहरणप्रदर्शनेन पण्डितराजः स्वमतं द्रढयति—

'यथा महाभारते गीतासु विश्वरूपं दृष्टवतः पार्थस्य—'पश्यामि देवांस देव ! देहे, सर्वांस्तथा भूतविशेषसङ्घान् ।' इत्यादौ वाक्यसन्दर्भे—अत्र भगव श्रीकृष्णेन मुग्धमर्जुनं स्वविराट्रूपं प्रदर्शितम्, यं दृष्ट्वा अर्जुनः भगव श्रीकृष्णं प्रति कथयति—'हे देव ! अहं तत्र शरीरे सर्वदेवान् सर्वजीवांश्च पश्या इत्यादि गीतावाक्येषु यद्यपि विस्मयस्य प्रतीतिर्भवति, तथापि तद्भक्त्यपेक्ष विस्मयः गौणः, याऽर्जुनस्य हृदि भगवन्तं प्रति समुत्पन्ना ।

अत्रेदं तात्पर्यमस्ति यत्—यथात्र विस्मयस्य प्राधान्यं नास्ति तथैवो पद्येऽपि तस्य प्राधान्यं नैव । अतोऽत्र पर्यवसितं 'इत्थं चास्य रसालङ्कार मुचितम्' ।

अत्रायमर्थः पर्यवसितः—'चित्रं महानेष' इत्यादि पद्यमद्भुतरसध्वनेरु हरणं न भवितुमर्हति, अपि तु भावध्वनेरुदाहरणस्य सम्भवः; किञ्च विस्मयोऽप्यत्र बहुविभावजन्यो विद्यते । अतस्तन्मूलकरसवदलङ्कारोऽ भविष्यति ।

नन्वत्र भवन्तो यदि कथयिष्यन्ति यत् 'चित्रं महानेष' इत्यादि पद्ये भ प्रतीतिर्भवत्येव नहि, तदाऽहं किमुत्तरयामि, केवलं सहृदयाः प्रार्थ्यन्ते यत् चक्षुषी निमील्य स्वस्थो भूत्वा विचारयन्तु तत्पश्चात् कथयन्तु यत्—अत्र भ प्रतीतिर्भवति न वा, अस्तु दुराग्रहं परित्यज्य विचारे कृते सति अत्र भ प्राधान्यं निर्विवादमिति । तथा चोक्तं ग्रन्थकारः—

'भक्तिर्नैवात्र प्रतीयत इति चेत्, दरमुकुलितलोचनं विदाङ्कुर्व सहृदयाः' ।

आग्रहं विहाय सहृदयैर्विहिते विचारे भक्तेरिह प्राधान्यं विस्मय चाप्राधान्यं व्यक्तं प्रतिभायादिति भावः ।

( २४ ) **प्रश्नः**—रसानां विरोधाविरोधौ चिन्तयत ।

( सं० सं० विश्व० १९७

**उत्तरम्**—प्रस्तुतोऽयं प्रसङ्गः साहित्यशास्त्र-चूडामणेः पण्डितराजजगन्ना विरचितस्य रसगङ्गाधरस्य प्रथमानने निरूपितस्य रसविचारप्रकरणस्य च भागे-रसानामसंलक्ष्यक्रमव्यङ्ग्यव्यवस्थापनानन्तरं भक्तिरसस्याङ्गीकारे विप्र पत्तिनिरूपणानन्तरं प्रसङ्गप्राप्तरसानां परस्परमविरोधस्य विरोधस्य विद्यते । तथा चोक्तं तत्र—

'एतेषां परस्परं कैरपि सहाविरोधः, कैरपि विरोधः। तत्र वीर-शृङ्गारयोः, शृङ्गार-हास्ययोः, वीराद्भुतयोः, वीर-रौद्रयोः, शृङ्गाराद्भुतयोश्चाविरोधः। शृङ्गार-बीभत्सयोः, शृङ्गार-करुणयोः, वीर-भयानकयोः, शान्त-रौद्रयोः, शान्त-शृङ्गारयोश्च विरोधः।

अनेन प्रकारेण रसानां पारस्परिकमविरोधं विरोधञ्च प्रदर्श्य, प्रबन्धे विरुद्धरससन्निवेशाभावमुपदिशति ग्रन्थकारः। तद्यथा—

'तत्र कविना प्रकृतरसं परिपोष्टुकामेन, तदभिव्यञ्जके काव्ये तद्विरुद्ध-रसाङ्गानां निबन्धनं न कार्यम्। तथाहि सति तदभिव्यक्तौ विरुद्धः प्रकृतं बाधेत। सुन्दोपसुन्दन्यायेन वोभयोरुपहतिः स्यात्।

अत्रायं निष्कर्षः—प्रस्तुतं रसं सम्यक्पुष्टीकरणस्येच्छा कवेर्यदि भवेत्, अथवा तस्येच्छा भवेद्यत्—मम काव्येऽमुकरसस्य परिपाकः पूर्णतया स्यात्तदा तत्कर्त्तव्यं भवति यत् तद्रसाभिव्यञ्जके काव्ये तद्विरुद्धरसस्याङ्गानां वर्णनं न कुर्यात्, यतो हि विरुद्धरसस्याभिव्यक्तौ सा प्रस्तुतं रसं बोधयिष्यति—अथवा सुन्दोपसुन्दन्यायेन द्वावपि रसौ नष्टौ भविष्यतः, एकस्यापि परिपाको न भविष्यति।

साम्प्रतं प्रयोजनवशाद् यदि कविः द्वयोः अनेकानां रसानां वा समावेशः यद्येकस्मिन् काव्ये कर्त्तुमिच्छेत् चेत् कथं समावेशो भविष्यति? इति आकाङ्क्षायां ग्रन्थकारः प्रतिपादयति यत्—

यदि तु विरुद्धयोरपि रसयोरेकत्र समावेश इष्यते, तदा विरोधं परिहृत्य विधेयः। तथा हि विरोधस्तावद् द्विविधः—स्थितिविरोधी ज्ञानविरोधश्च। आद्यः—तदधिकरणावृत्तितारूपः। द्वितीयः—तज्ज्ञानप्रतिबध्यज्ञानकत्वलक्षणः। तत्राधिकरणान्तरे विरोधिनः स्थापने प्रथमो निवर्त्तते। यथा—नायकगतत्वेन वीररसे वर्णनीये प्रतिनायके भयानकस्य।

नन्वत्रैषा शङ्का जागर्त्ति यत् नायकाद्यवृत्तीनां परब्रह्मपरिच्छिन्नानां रसानामेकस्मिन्नधिकरणे समावेशो विरोधो वा सम्भवति न वेत्याकाङ्क्षायां ग्रन्थकारः आह—'रसपदेनात्र प्रकरणे तदुपाधिः स्थायिभावो गृह्यते, रसस्य सामाजिकवृत्तित्वेन नायकाद्यवृत्तित्वात्, अद्वितीयानन्दमयत्वेन विरोधासम्भवाच्च।'

अत्रायं भावः—अस्मिन् प्रकरणे रसपदेन तदुपाधिस्वरूपाणां स्थायिभावानां ग्रहणमिति मन्तव्यम्, यतो हि रसः सामाजिकेषु तिष्ठति; नायकादिषु

नहि। अपरञ्च—रसो वै अद्वितीयानन्दमयः अर्थात् ब्रह्मस्वरूपोऽस्ति। तज्ज्ञान-समयेऽन्यस्य कस्यापि ज्ञानं भवत्येव नहि, पुनः रसेषु परस्परविरोधस्य समावेशोऽसम्भवः।

स्थितिविरोधः कथमपसरेत्, इत्यस्योदाहरणं यथा—

'कुण्डलीकृतकोदण्ड दोर्दण्डस्य पुरस्तव।
मृगारातेरिव मृगाः परे नैवावतस्थिरे॥'

अस्मिन् पद्ये कश्चन चाटुकारः राजानं स्तौति। अत्रायं विमर्शः—नायके वीरस्य प्रतिनायके च भयानकस्य वर्णनं कृतमस्ति यद्भिन्नाधिकरणे स्थितत्वात् दोषाधायको नास्ति।

साम्प्रतं द्वितीय-ज्ञानविरोध-निवृत्त्यर्थं विधिमुत्पादयति। यथा—

'रसान्तरस्याविरोधिनः सन्धिकर्तुरिवान्तरालेऽवस्थापने द्वितीयोऽपि निवर्तते। यथा मन्निर्मितायामाख्यायिकायां कण्वाश्रमगतस्य श्वेतकेतोर्महर्षेः शान्तरस-प्रधाने वर्णने प्रस्तुते किमिदमनाकलितपूर्वं रूपम्? कोऽयमनिर्वाच्यो वचन-रचनाया मधुरिमा? इत्यद्भुतस्यान्तरावस्थापनेन वरवर्णिनी प्रत्यनुरागवर्णने।

अत्र—शान्त-शृङ्गारयोः एतयोः परस्पर-विरोधिरसयोर्मध्ये तयोर्द्वयोरेव अविरोधी अद्भुतः समागतो येन तयोर्द्वयोर्विरोधोऽपि दूरीभूतः, अतः सन्तत-स्थितिरेव विरोधस्य मूलमासीत्। तच्च समाप्तम्।

द्वितीयविरोधस्य सुस्पष्टमुदाहरणान्तरं यथा पद्येन—

'सुराङ्गनाभिराश्लिष्टा व्योम्नि वीरा विमानगाः।
विलोकन्ते निजान् देहान् फेरुनारीभिरावृतान्॥'

अस्मिन् पद्ये—देवाङ्गनान् आलम्बनं स्वीकृत्य शृङ्गाररसः, वीराणाञ्च मृतकशरीरञ्चालम्बनं स्वीकृत्य वीभत्सस्य प्रतीतिर्भवति, इमौ द्वावपि रसौ परस्परविरोधिनौ स्तः, अतः अनयोर्द्वयोर्मध्ये तदुभयाविरोधिनो वीररसस्य निवेशः कृतः। यद्यप्यत्र वीररसव्यञ्जकः शब्दः नास्ति, तथापि स्वर्गलाभस्य चर्चया तस्याक्षेपो भवति। अन्तर्निवेशस्यार्थोऽस्ति यत् परस्परविरोधि-रसानामास्वादनस्य यः समयः तन्मध्यसमये तस्यास्वादनम्। तदत्र स्पष्ट-मेवास्ति, यतः उक्तपद्यस्य पूर्वार्द्धे शृङ्गाररसस्यास्वादनं, तत्पश्चाच्च वीर-रसस्यास्वादो भवति, तत्पश्चाच्च द्वितीयार्धे बीभत्सरसस्य।

इत्थं रसानां विरोधाविरोधौ समुपस्थितौ भवतः।

( २५ ) **प्रश्नः**—'अनौचित्यादृते नान्यद् रसभङ्गस्य कारणमि'ति कुत्रोपन्यस्तं तत्र चास्य साफल्यमिति विवेचनीयम् ।

( सं० सं० विश्व० १९८२ )

**उत्तरम्**—प्रस्तुतोपर्युक्तोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने चर्चितानां रसदोषाणां मध्ये त्रयोदशो रसदोषः 'अनौचित्यमि'ति वर्णितमस्ति । तथा च तत्र—

'अनौचित्यं तु रसभङ्गहेतुत्वात् परिहरणीयम् ।'

अत्रायं भावः—अनौचित्यं रसास्वादोपयोगिपदार्थसार्थनिष्ठं तु शब्दोऽस्य प्रकारान्तर्भावं व्यवच्छिनत्ति । अनुचितानां वस्तु-विषयाणां वर्णनं रसभङ्गस्य कारणं भवति । अतस्तत् सर्वथा त्याज्यमस्ति । अत्रेयं शङ्का समापतति यत्—रसस्तु न कोऽपि मूर्तः पदार्थः तदा तस्य भङ्गः कथमिति, अस्य सन्देहस्य निवृत्त्यै भङ्गपदस्य व्याख्यानं यथा—

'भङ्गश्च पानकादिरसादौ सिकतादिनिपातजनितेवारुन्तुदता' ।

**अस्यायमाशयः**—यथा पानकादौ तरले वस्तुनि बालुकादिनिपतनेन विघातो जायते, तेनैव प्रकारेण रसास्वादे विघातः रसस्य भङ्गः कथ्यते ।

**अनौचित्यस्य कियन्तो भेदाः**—

जात्यादेरनुचितं यथा—गवादेस्तेजो बलकार्याणि पराक्रमादीनि, सिंहादेश्च साधुभावादीनि, स्वर्गे जराव्याध्यादि, भूलोके सुधा-सेवनादि, शिशिरे जलविहारादीनि, ग्रीष्मे वह्निसेवा, ब्राह्मणस्य मृगया, बाहुजस्य प्रतिग्रहः, शूद्रस्य निगमाध्ययनम्, ब्रह्मचारिणो यतेश्च ताम्बूलचर्वणम्, दारोपसङ्ग्रहः, बालवृद्धयोः स्त्रीसेवनम्, यूनश्च विरागः, दरिद्राणामाढ्याचरणम्, आढ्यानाञ्च दरिद्राचारः—इत्येतानि जात्यादेरनौचित्यानि भवन्ति ।

एवमेव प्रकृत्यनौचित्ये रत्यनौचित्यं भवति, तथा च रत्यनौचित्यवत् क्रोधानौचित्यमपि भवति ।

अस्य प्रकृत्यनौचित्यस्य कारणमस्ति यत् अस्माकं येषु दिव्यालम्बनेषु या पूज्यताबुद्धिरस्ति, तत्र यदि साधारणनायकानामिवानुभावान् सर्वथा स्फुटीकृत्य रतेः वर्णनं करिष्यामस्तदा तच्छ्रुत्वा सहृदयानां हृदि रसस्य विकासो न भविष्यति, अपि तु सङ्कोच एव भविष्यति । अनेनैव प्रकारेण यदि साधारणनायकेषु तत्प्रकारकस्य क्रोधस्य वर्णनं भवेत्, यादृशः क्रोधः दिव्यनायकेषु

वर्णितो भवति भविष्यति वा तदा श्रोतॄन् मिथ्याज्ञानं भविष्यति । अतस्तद्-वर्णनेन रसस्य विकासो नैव सम्भवः ।

यदि चेत् भवन्तः कथयिष्यन्ति यत् रसास्वादात् पूर्वं भट्टनायकमतानुसारं भावकत्वव्यापारेण नव्यमतानुसारेण च सहृदयतामूलकेन भावनाविशेषरूप-दोषेण विभावादीनां साधारणीकरणे कृते सति दिव्यनायकेष्वपि पूज्यताबुद्धि-र्नोत्पन्ना भविष्यति ।

अत्र सुस्पष्टं समाधानं यथा—

उपर्युक्तायाः शङ्कायाः समाधानमस्ति यद् यत्र सहृदयानां रसास्वादः प्रमाणेन सिद्धयति, तत्रैव साधारणीकरणस्य कल्पना क्रियते; न तु सर्वत्र । तात्पर्यमिदमस्ति यत् उक्तस्थाने सहृदयानां रसानुभवः प्रमाणसिद्धः नास्ति । अतस्तत्र साधारणीकरणस्य नैव कल्पना भवितुमर्हति ।

साम्प्रतं चरमस्य व्यवहारानौचित्यस्य प्रतिपादनमावश्यकमिति कृत्वा ग्रन्थकारमुखेनैव प्रस्तौमि । तद्यथा—

'तथा विद्यावयो-वर्णाश्रम-तपोभिरुत्कृष्टैः स्वतोऽपकृष्टेषु न सबहुमानेन वचसा व्यवहर्त्तव्यम् ।

अत्रायं सारांशः—उपर्युक्तप्रकारेण ये विद्यया, अवस्थया, आश्रमेण तपसा चोत्कृष्टाः स्युस्तान् स्वापकृष्टैः सह अत्यन्तं सम्मानयुक्तैर्वचोभिः न व्यवहर्त्तव्यः ।

अपरञ्चैतद्विमृश्यैव श्रीमद्भिः आनन्दवर्धनाचार्यैः ध्वन्यालोकस्य तृतीयो-द्द्योते स्पष्टीकृतं यत्—

'अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् पुरा ॥'

आचार्यमम्मटस्य काव्यप्रकाशे तु 'औचित्योपनिबन्धस्तु' इति पाठो दृश्यते ।

**अत्र विशेषेण ध्यातव्यम्**—अनौचित्यपरिहारेऽपि विशेषेण बोद्धव्यं यद् यावता अनौचित्येन रसस्य पुष्टिर्भवति तावता अनौचित्यस्य परिहारः कर्त्तव्यः । यतो हि यदनौचित्यं रसप्रतिकूलं भवेत् तस्यैव निषेधः समुचितः । एतान् विकल्पान् आधारीकृत्यैकमुदाहरणमपि प्रस्तूयते—

'ब्रह्मन्नध्ययनस्य नैष समयस्तूष्णीं बहिः स्थीयतां
स्वल्पं जल्प बृहस्पते जडमते ! नैषा सभा वज्रिणः ।

वीणां संहर नारद ! स्तुतिकथालापैरलं तुम्बुरो
सीतारल्लक-भल्ल-भिन्नहृदयः स्वस्थो न लङ्केश्वरः ।।'

पर्यन्ते आचार्यस्य कथनमस्ति यत्—

'एषा हि दिगुपदर्शिता, अनया सुधीभिरन्यदप्यूह्यम् । इत्यलं पल्लवितेनेति दिक् ।

( २६ ) प्रश्नः—माधुर्यौजःप्रसादानां त्रयाणां गुणानां रसमात्रधर्मत्वं जगन्नाथ-दर्शितदिशा साधयत । ( सं० सं० विश्व० १९७६ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने रसनिरूपणानन्तरं प्रवर्तते । तत्र प्रसङ्गसङ्गत्या गुणानां निरूपणं विद्यते । तथा चाह ग्रन्थकारः—

'रसेषु चैतेषु निगदितेषु माधुर्यौजःप्रसादाख्यांस्त्रीन् गुणानाहुः ।'

अत्रायमाशयः—पूर्वोक्तेषु श्रृङ्गारादि नवरसेषु माधुर्य-ओज-प्रसादश्च त्रयो गुणाः तिष्ठन्ति—इति प्राचीनानां कथनमस्ति ।

तेषु विद्यमानेषु रसेषु माधुर्यं कस्मिन् रसे कियत् तिष्ठति ? इति जिज्ञासायां मतत्रयमुपस्थापयति ।

'तत्र श्रृङ्गारे संयोगाख्ये यन्माधुर्यं, ततोऽतिशयितं करुणे, ताभ्यां विप्रलम्भे, तेभ्योऽपि शान्ते, उत्तरोत्तरमतिशयिताबाश्चित्तद्रुतेः जननात् इति केचित् । संयोगश्रृङ्गारात् करुणशान्तयोस्ताभ्यामपि विप्रलम्भे इत्यपरे । संयोगश्रृङ्गारात् करुण-विप्रलम्भ-शान्तेष्वतिशयितमेव, न पुनस्तत्रापि तारतम्यम्, इत्यन्ये ।

अत्रायं भाव—कतिपयमेधाविनां विदुषां तद्गुणानां विषये कथनमस्ति यत्—सम्भोगश्रृङ्गारे यावन्माधुर्यं भवति, ततोऽधिकं करुणरसे ताभ्यां द्वाभ्यामधिकं विप्रलम्भश्रृङ्गाररसे एवञ्चैभ्यः सर्वतोऽधिकं शान्तरसे भवति, यतः पूर्वं-पूर्वरसापेक्षयोत्तरोत्तररसे चित्तमधिकं द्रुतं भवति । अत्रान्येषां विदुषां मतमस्ति यत्—सम्भोगश्रृङ्गारादधिकं माधुर्यं करुण-शान्तरसयोर्भवति, आभ्यां द्वाभ्यां चाधिकं विप्रलम्भश्रृङ्गारे भवति । केषाञ्चनविदुषां कथनमस्ति यत्—सम्भोगश्रृङ्गारादधिकं ( मिथस्तु तुल्यमेव ) करुण-विप्रलम्भ-शान्तेषु माधुर्यं तिष्ठतीति चरमं मतम् ।

साम्प्रतं त्रयाणामुपर्युक्तानां मतानां परीक्षणं भवति । यथा—

तत्र प्रथम-चरमयोर्मतयोः करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्, इति प्राचां सूत्रमनुकूलम्। तस्योत्तरसूत्रगतस्य 'क्रमेण' इति पदस्यापकर्षानपकर्षाभ्यां व्याख्याद्वयस्य सम्भवात्। मध्यस्थे तु मते—करुण-शान्ताभ्यां विप्रलम्भस्य माधुर्यातिशये, यदि सहृदयानामनुभवोऽस्ति तदा स प्रमाणम्।

अनेन प्रकारेण शृङ्गारादिरसत्रये माधुर्यस्य यथार्थस्थितिं प्रतिपाद्य वीरादिरसत्रय ओजसः स्थितिं समुन्मीलयति। तद्यथा—

वीर-बीभत्स-रौद्रेष्वोजसो यथोत्तरमतिशयः, उत्तरोत्तरमतिशयितायाश्चित्तवृत्तेर्जननात्। एवमेव—अद्भुत-हास्य-भयानकानां गुणद्वययोगित्वं केचिदिच्छन्ति। अपरे तु प्रसादमात्रम्। परश्चात्रैतदप्यवधेयं यत्—प्रसादगुणस्तु सर्वेषु रसेषु सर्वासु रचनासु च तिष्ठति। तात्पर्यमिदमस्ति यत्—माधुर्यौजो गुणौ उक्तेषु त्रिषु निश्चितरसेषु तिष्ठतः, अपि च तद्गुणाभिव्यक्तकर्त्री रचनाऽपि नियताऽस्ति। परञ्च प्रसादगुणविषये एतादृशी स्थितिर्नास्ति, स तु सर्वेषु रसेषु तिष्ठति, सर्वाभिः रचनाभिश्च व्यक्तो भवति। इदमेवान्यगुणानामपेक्षया प्रसादगुणे वैशिष्टयमस्ति।

अपरञ्च—नन्वेषु गुणेषु माधुर्यं द्रुतेः, ओजः दीप्तेः प्रसादश्च विकासस्य प्रयोजको भवति, न तु जनकः; जनकस्तु एषां तद्गुणैर्युक्तानां रसानामास्वादाः भवन्ति। अर्थात्—द्रुति-दीप्ति-विकासाश्च एता तिस्रः चित्तवृत्तयः उक्तैः त्रिभिर्गुणैः उत्पन्नाः भवन्ति। अपि तु एभिर्गुणैः विशिष्टानां रसानामास्वादेन साक्षादुत्पन्नाः भवन्ति। सारांशोऽयमस्ति यत् रसास्वादेन चित्तं द्रवीभवति। ओजपूर्णरसानामास्वादेन चेतसि एकप्रकारस्य स्फूर्त्तिर्जायते, प्रसादगुणयुक्तरसस्यास्वादेन चित्तं विकसितं भवति।

प्राचीनमतस्योपसंहारो यथा ग्रन्थकारदिशा—

'एवमेतेषु गुणेषु रसमात्रधर्मेषु व्यवसितेषु 'मधुरा रचना' ओजस्वी बन्धः इत्यादयो व्यवहाराः 'आकारोऽस्य शूरः' इत्यादि-व्यवहारवदौपचारिकाः' इति मम्मटभट्टादयः।

उपर्युक्तं प्राचीनमतं खण्डनाय प्रत्यक्षप्रमाणाभावं ग्रन्थकारः प्रदर्शयति—

'येऽमी माधुर्यौजःप्रसादा रसधर्मतयोक्ताः, तेषां रसमात्रधर्मत्वे किं मानम्? प्रत्यक्षमेवेति चेत्, न दाहादेः कार्यादनलगतस्योष्णस्पर्शस्य यथा भिन्नतयाऽनुभवः तथा द्रुत्यादिचित्तवृत्तिभ्यो रसकार्येभ्योऽन्येषां रसगतगुणानामननुभवात्।

अधुना पण्डितराजाः गुणानां विषये उक्तप्राचीनानां मतस्य खण्डनं कुर्वन्ति। तेषां कथनमस्ति यत्—प्राचीनैः यद्गुणान् केवलं रसस्य धर्मः कथितः तैः कथितं यत्—गुणाः रसे एव तिष्ठन्ति, रचनादिषु न। अत्र किं प्रमाणम्? प्रत्यक्षमेव प्रमाणम् अस्ति।

यदा वयमग्निना दीप्ताः न भवामः तदा अपि तद्गुणोष्णस्पर्शस्यानुभवो भवति, तद्वत् रसानां कार्याणि, द्रुत्यादयश्चित्तवृत्तयः सन्ति तदतिरिक्तेषु रसेषु स्थितानां गुणानां वयं न पृथगनुभवामः। इत्यलं पल्लवितेनेति दिक्।

( २७ ) प्रश्नः—दशसु शब्दगुणेषु कयोश्चिद् द्वयोर्लक्षणं सपदकृत्यं दर्शयत। ( सं० सं० वि० १९७५ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः साहित्यविद्या-वारिधेः पण्डितराजजगन्नाथ-विरचितस्य रसगङ्गाधरस्य प्रथमानने चर्चितोऽस्ति। तत्र रस-दोषनिरूपणानन्तरं गुणानां निरूपणमस्ति। गुणानां मध्ये दश शब्दगुणाः, दश अर्थगुणाश्च सम्भवन्ति। प्रस्तुतप्रकरणे दश शब्दगुणेषु—श्लेषः, प्रसादः, समता, माधुर्यम्, सुकुमारता, अर्थव्यक्तिः, उदारता, ओजः, क्रान्तिः समाधिश्च। एतन्नामकाः पुनः अर्थगुणा अपि भवन्ति। अत्र द्वयोः शब्दगुणयोः लक्षणं, सपदकृत्य-व्याख्यानं तदुदाहरणञ्च क्रमेण ग्रन्थकारमुखेन यथा—

तत्रादौ श्लेषस्य—

शब्दानां भिन्नानामप्येकत्वप्रतिमानप्रयोजकः संहितयैकजातीयवर्णविन्यास-विशेषो गाढत्वापरपर्यायः श्लेषः।

अत्रायमाशयः—भिन्न-भिन्नस्वरूपाणां शब्दानामपि तद्योजनाविशेषं श्लेष इति कथयन्ति साहित्यशास्त्रविदः। यः ( श्लेषः ) एकजातीयैः वर्णैः युक्तः स्यात्—अतिसन्निकर्षेण चैकविधैः शब्दैः रचितमिव प्रतीतो भवेत्। तद्योजना-विशेषस्यापरं नाम गाढत्वमपि दीयते।

अत्र प्राचीनाः कथयन्ति—'श्लिष्टमस्पष्टशैथिल्यम्' इति। ते कथयन्ति यत्—श्लेषः तद्रचनाविशेषः, यस्मिन् शिथिलता स्पष्टरूपेण लक्षिता न भवेत्। एवम्भूतस्य श्लेषस्योदाहरणं यथा—

'अनवरतविद्वद्द्रुमद्रोहिदारिद्र्यमान्द्याद् द्विपोद्दामदर्पौघविद्रावणप्रौढ-पञ्चाननः' इति।

अस्मिन् गद्ये—कश्चिच्चाटुकारः राजानं वर्णयति यत्—हे राजन्! त्वं ( भवान् ) विद्वत्समाजरूपवृक्षाणां सर्वदा द्रोहिणः दारिद्र्यरूप-मदमत्त-

हस्तिनः उत्कटं गर्वसमूहं नाशकरणे महान् सिंहोऽसि, अर्थात् तव दर्शनात् विदुषां दारिद्र्यं तथैव नश्यति यथा सिंहदर्शनात् मदोन्मत्तानां गजानां दानवारयः शुष्यन्ति ।

अस्मिन् गद्ये सन्धिविधानेन विभिन्नपदान्यपि एकपदमिव प्रतीयन्ते, अतः श्लेषगुणस्यो( शाब्दिकस्य )दाहरणमस्ति ।

**द्वितीयः प्रसादगुणः—**

प्रसादगुणस्य लक्षणं यथा—गाढत्व-शैथिल्याभ्यां व्युत्क्रमेण मिश्रणं बन्धस्य प्रसादः । अत्रायम्भावः—रचनायां गाढतायाः शिथिलतायाश्च विपरीतक्रमेण मिश्रणमर्थात् रचनायाः प्रथमं शिथिलत्वं पश्चाच्च गाढत्वं प्रसादो नाम शब्दगुणः कथ्यते । एतस्योदाहरणञ्च यथा—

'किं ब्रूमस्तव वीरतां वयममी, यस्मिन् धराखण्डल !
क्रीडाकुण्डलितभ्रुशोणनयने दोर्मण्डलं पश्यति ।
माणिक्यावलिकान्तिदन्तुरतरैर्भूषासहस्रोत्करै-
र्विन्ध्यारण्यगुहागृहावनिरुहास्तत्कालमुल्लासिताः ॥'

अस्मिन् पद्ये कश्चिच्चाटुकारः राजानं सम्बोध्य ब्रवीति । अत्रायं सारांशः—यस्य कस्यचित् राज्ञः उक्तचेष्टाभिः व्यग्रीभूय राजानः पलायनं कृत्वा विन्ध्यपर्वतस्य गुफासु निलीनाः अभवन्, तेषामेवम्भूतानां वीरतायाः वर्णनं सर्वसाधारणाः जनाः किङ्करिष्यन्ति ?

अत्र पुनः पद्ये उपपादनं यथा—"अत्र 'यस्मिन्नित्यन्तं शैथिल्यम्, भ्रुशब्दान्तं गाढत्वम्, 'पुनर्नयने'त्यन्तं प्रथममित्यादि बोध्यम्" । अतोऽत्र प्रसादगुणस्योदाहरणं सुस्पष्टं भवति ।

( २८ ) **प्रश्नः**—( क ) भावत्वं परिष्करणीयम् ।

( अथवा )

( ख ) अतिव्याप्त्यादिदोषप्रदर्शनपूर्वकं भावध्वनिं निरूप्य कथं न रसध्वनावन्तर्भावः, कथं वा भावानां सङ्ख्यानियमः ? इति समाधीयताम् । ( सं० सं० विश्व० १९८४ )

( अथवा )

( ग ) परमतनिरसनपूर्वकं पण्डिराजाभिमतभावध्वनिः विशदं विवेचनीयः । ( सं० सं० वि० १९८२ )

( घ ) किं नाम भावत्वमिति विशदं विविच्यताम् ।

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने चर्चितस्य भावध्वनिनिरूपणप्रसङ्गात् सन्दर्भितोऽस्ति। तत्रादौ एष प्रश्नः समायाति यत् किं नाम भावत्वमिति। उत्तरे समायाति यत् 'विभावानुभावभिन्नत्वे सति, रसव्यञ्जकत्वमिति चेत्, रसकाव्यवाक्येऽतिव्याप्त्यापत्तेः'।

अत्रायमाशयः—यदि कोऽपि भावस्य लक्षणं कुर्यात् यत्—विभावानुभावानामतिरिक्ताः ये रसानां व्यञ्जकाः स्युः, येभ्यः रसाः व्यक्ताः भविष्यन्ति तानेव 'भाव' इति कथयन्ति, एतन्न समुचितमिति, यतो हि रसानां प्रतिपादकस्य काव्यस्य पदादल्याम् अस्य लक्षणस्यातिव्याप्तिर्भविष्यति। अर्थात् रसप्रतिपादकस्य काव्यस्य वाक्ये विभावानुभावैः अतिरिक्ताः सन्ति रसव्यञ्जकाश्च सन्ति तानपि 'भाव' इति कथनमुचितं भविष्यति।

नन्वत्र शङ्कते यत्—शब्दस्य व्यञ्जकत्वविरहात् कुतोऽतिव्याप्तिरिति ? उत्तरयति—अर्थद्वारा शब्दस्यापि व्यञ्जकत्वात्। अर्थात्—साक्षाद् रसव्यञ्जकोऽर्थ एव भवेन्नाम, परश्चार्थैः शब्दोऽपि रसव्यञ्जको भवति। अत एव विदुषां कथनमस्ति यत्—

'शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः।
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता॥'

वस्तुतस्तु—ध्वनिकारादिभिः शब्दाः साक्षात् व्यञ्जकाः स्वीकृताः, तदनुसारम् अर्थद्वारा वाक्यं व्यञ्जक-स्वीकृतेः आवश्यकतैव नास्ति।

एवञ्च—शब्दस्य साक्षाद् व्यञ्जकमबुद्ध्वा दोषवारणाय लक्षणे निवेशं विधाय निरस्यति। विभावादिभिन्नत्वे सति साक्षाद्रसव्यञ्जकत्वमिति लक्षणे तु दोषद्वयं स्यात्, रसस्य पुनः पुनरनुसन्धानरूपाया भावनाया एव साक्षाद् व्यञ्जकत्वं, भावस्य तु भावनाद्वारैव रसव्यञ्जकत्वमस्तीति साक्षाद्रसव्यञ्जकत्वस्य भावेऽप्यभावादसम्भव एकः, साक्षाद्रसव्यञ्जिकायां भावनायामतिव्याप्तिश्च द्वितीयो दोष इत्येतन्निवेशोऽसङ्गत इति।

'अत एव च ( विभावानुभावभिन्नत्वस्येव ) शब्दभिन्नत्वस्यापि तद्विशेषपरत्वे न निस्तारः। प्रधानध्वन्यमानभावे रसव्यञ्जकताऽभावादव्याप्त्यापत्तेश्च।—अत्र भावध्वनावव्याप्तिमात्रवारणमाशङ्क्य खण्डनं यथा ग्रन्थकार-

मुखेनैव। 'न च तत्रापि प्रान्ते रसोऽभिव्यज्यत एवेति वाच्यम्, भावध्वनिविलोपप्रसङ्गात्।'

अत्रायमाशयः—अत्रापि यदि वादिनः कथयेयुः—'भावध्वनिस्थलेऽपि भावस्याभिव्यक्त्यनन्तरमन्ते रसस्याभिव्यक्तिर्यद्यप्यवश्यमेव भवति तथापि तत्र रसध्वनेः व्यवहारस्तत्रैतदर्थं न भवति यत् रसाभिव्यक्तौ तत्र कोऽपि चमत्कारः न तिष्ठति भावस्याभिव्यक्तौ चमत्कारस्तिष्ठति अतः भावध्वनेः व्यवहारो भवति'—एतत् कथनमपि वादिनामुचितं न प्रतिभाति, यतो हि चमत्कारहीनस्य रसस्याभिव्यक्तौ किमपि प्रमाणं नास्ति, रसः चमत्कारहीनः भवत्येव नहि।

साम्प्रतं भावध्वनौ पार्यन्तिकीं रसाभिव्यक्तिमभ्युपगत्यापि तद्भावलक्षणं दूषयति—

'अस्तु वा प्राधान्येन ध्वन्यमानस्यापि भावस्य प्रान्ते रसाभिव्यञ्जकत्वम्, तथापि देशकालवयोऽवस्थादिनानापदार्थघटिते पद्यवाक्यार्थे तथाप्यतिव्याप्तिः, तस्य विभावानुभावभिन्नत्वे सति रसाभिव्यञ्जकत्वात्'।

अपि च प्रकारान्तरेणोपक्षिप्य निरस्यति—

'नापि रसाभिव्यञ्जकचर्वणाविषयचित्तवृत्तित्वं तत्त्वम्। भावादिचर्वणायामतिप्रसङ्गवारणाय चर्वणाविषयेति चित्तवृत्तिविशेषणमिति वाच्यम्।

'कालागुरुद्रवं सा हालाहलवद् विजानती नितराम्।
अपि नीलोत्पलमालां, बाला व्यालावलिं किलामनुते॥'

अत्र नायकं प्रति विरहिण्याः सख्या कथिते 'कालागुरुद्रवं सा' इत्यादि पद्ये 'कालागुरुं विषमिव मनुते' इत्याकारकस्य नायिकायाः ज्ञानस्य वर्णनमस्ति, तज्ज्ञानेऽतिव्याप्तिर्भविष्यति; यतो हि तज्ज्ञानं विप्रलम्भश्रृङ्गारस्यानुभवोऽस्ति—वियोगकालिकप्रेम्णः सम्भवादेवोत्पन्नोऽस्ति। अतस्तस्यास्वादो भवति, स चास्वादः रसस्य व्यञ्जकोऽपि भवति।

अतःपरं भावत्वमखण्डोपाधिं स्वीकृतवतां मतं दूरीकरोति—

'नाप्यखण्डम्, तत्त्वे मानाभावात्'

अत्रायं निष्कर्षः—यदि वादिनः कथयेयुः यत् भावत्वमखण्डोपाधिर्वर्तते, अतस्तस्य लक्षणस्यावश्यकतैव नास्ति? नाप्युचितमेतत्। यतो हि भावत्वमखण्डोपाधिस्वीकारेऽनुगताप्रतीतिः या ज्ञापकप्रमाणं भवेत्, तन्नास्ति, तमखण्डोपाधि अस्वीकारेणापि निर्वाहो भविष्यति, पुनस्तस्य स्वीकारोऽपि निरर्थक एव।

इत्थं परकीयलक्षणानि प्रतिक्षिप्य स्वकीयं लक्षणमुपक्षिपति । तद्यथा—

'विभावादि व्यज्यमान-हर्षाद्यन्यतमत्वं तत्त्वम् ।'

विभावादिभिः ध्वन्यमानेषु हर्षादिषु प्रत्येकस्य नाम 'भाव' इत्यस्ति । इत्यलमतिविस्तरेण ।

( २९ ) प्रश्नः—भावलक्षणं भावाभिव्यक्तिप्रकारश्च लिखत ।

( सं० सं० वि० १९७५ )

उत्तरम्—प्रस्तुतप्रश्नस्य समाधानं पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने विद्यते । तत्र भावस्य परकीयलक्षणानि प्रतिक्षिप्य ग्रन्थकारः सुस्पष्टं स्वकीयं लक्षणमुपस्थापयति । यथा—

'विभावादि व्यज्यमानः—हर्षाद्यन्यतमत्वं तत्त्वम् ।'

अत्रायम्भावः—विभावादिभिः ध्वनितेषु हर्षादिषु एकस्य नाम भावोऽस्ति । साम्प्रतं स्वलक्षणं प्राचीनोक्त्या ग्रन्थकारः पुष्णाति—

यदाहुः—'व्यभिचार्यञ्चितो भाव इति' अर्थात्—ध्वन्यमानं व्यभिचारिभावं 'भाव' इति कथयन्ति ।

नन्वत्र शङ्कते यत्—हर्षादिभावाः केन प्रकारेण ध्वनिताः भवन्ति ? इति जिज्ञासायाम्—अभिव्यक्तेः त्रिषु मतेषु प्रथमं सिद्धान्तमतमुपस्थापयति ग्रन्थकारः—

हर्षादीनाञ्च सामाजिकगतानामेव स्थायिभावन्यायेनाभिव्यक्तिः । अत्रायं निर्गलितोऽर्थः—सामाजिकेषु नाटकादिदर्शकेषु काव्यानां पाठकेषु श्रोतृषु च वासनारूपेण ये हर्षादयस्तिष्ठन्ति तेषामेव स्थायिभावानामिवाभिव्यक्तिर्भवति, अर्थात्—वासनारूपेण सामाजिकेषु स्थितैः, काव्यनाटकादिभिः उपस्थापितैः अनुकूलैः प्रतिकूलैश्च सर्वप्रकारकैः भावैः अमर्दनीयानां स्थायिभावानामिव स्वाभिव्यक्तिसामग्र्या स्थिराभिव्यक्तिर्भवति । तेनैव प्रकारेण प्रधानभूतानां हर्षादिभावानामपि स्थिराभिव्यक्तिर्भवति ।

अभिव्यक्तेः द्वितीयं मतं प्रकाशयति यथा—'साऽपि रसन्यायेने'ति केचित् ।

अत्रेयमभिव्यक्तिः—कतिपयविदुषां कथनमस्ति यद् भावानामभिव्यक्तिः रसानामिव भवति, अर्थात् सामाजिकेषु यथा—स्वभावतः स्थितोऽप्यात्मानन्दः अविद्यया पिहितस्तिष्ठति, परञ्च—काव्यगतालौकिकव्यापारेण उक्ताविद्यात्मिकावरणस्य निवृत्तौ सति—सः स्वप्रकाशानन्दचिन्मयः प्रकाशितो भवति, तेनैवा-

वरणमुक्तेन स्थायिभावेनोपहितं चिदानन्दं सहृदयाः साहित्यिका रस इति कथयन्ति, तेनैव प्रकारेणावरणमुक्ताः चिद्विशिष्टहर्षादिभावा अपि सामाजिकानां हृदयेऽभिव्यक्ताः भवन्तीति भावः ।

अत्रावसरेऽभिव्यक्तेस्तृतीयं मतं यथा—

'व्यङ्ग्यान्तरन्यायेनेत्यपरे मन्यन्ते ।'

आशयोऽयमत्र—यथा काव्य-नाटकशब्दैः वाच्यार्थानामुपस्थितौ सति वक्तृबोद्धव्यज्ञानेन वस्त्वलङ्काररूपः संलक्ष्यक्रमव्यङ्ग्योऽर्थः सहृदयानां हृदि अभिव्यक्तो भवति, तेनैव प्रकारेण हर्षादिभावाः अपि संलक्ष्यक्रमव्यङ्ग्यरूपेऽभिव्यक्ताः भवन्ति ।

नन्वेषां भावानां व्यञ्जकाः के भविष्यन्तीति जिज्ञासायां समाधत्ते ग्रन्थकारः । तद्यथा—'विभावानुभावौ चात्र व्यञ्जकौ, न त्वेकस्मिन् व्यभिचारिणि ध्वन्यमाने व्यभिचार्यन्तरं व्यञ्जकतयाऽवश्यमपेक्ष्यते, तस्यैव प्राधान्यापत्तेः । अत्रायमभिप्रायः—विभावानुभावौ इमौ द्वावपि भावानां व्यञ्जकौ स्तः, न तु व्यभिचारिभावः, यद्येकस्य व्यभिचारिणः ध्वनिते सति–अन्यं व्यभिचारिण व्यञ्जकत्वेन स्वीकरणमावश्यकं भवेत् तदा स एव व्यञ्जको व्यभिचारिभाव प्रधानो भविष्यति । अत्र कारणमस्ति यद् यथाऽयं व्यभिचारिभावोऽभिव्यक्तो भवति, तथैव सोऽप्यभिव्यक्तो भविष्यति । व्यञ्जकता च तस्मिन् अधिकाऽस्ति अतः भावानां द्वावेव व्यञ्जकौ भवतः ।

अत्रायं निष्कर्षः ( निर्गलितोऽर्थः )—

वस्तुतस्तु यदा प्रकरणादिबलात् कोऽप्येको भावो प्रधानो भवेत्, तदा ध्वन्यमानसामग्र्याऽन्यभावाद्विरहितः केवलं प्रधानभाव एव ध्वनितो न भवेत अनेन कारणेन यदि कोऽप्यन्यभावः ध्वनितोऽपि भूयात्, स च प्रकरणप्रा भावस्यापेक्षया दुर्बलत्वेन तदङ्गीभूय तिष्ठेत् तदा कापि हानिर्न । अत्रा आशयः—प्रकरणादिसाहाय्येन प्रबलपक्षधरः एकभावः यदा प्रधानः स्या तदाऽन्यभावोऽन्यथासिद्धरूपे अभिव्यक्तो भूत्वाऽपि दुर्बलस्तिष्ठेत्, अतः प्रधा नैव भवितुमर्हति, अतः विभावानुभावयोरिव व्यभिचारिभावमपि भावा व्यञ्जकः स्वीकुर्यात्, तदा कस्या अपि हानेः सम्भावनैव न स्यात् । य गर्वस्य प्रधानतया व्यङ्ग्ये सति अमर्षोऽङ्गः अमर्षस्य च व्यङ्ग्ये सति ग अङ्गो भवति ।

अनेन प्रकारेण भावाभिव्यक्तिप्रकारः रसगङ्गाधरे चर्चितोऽस्ति ।

( ३० ) प्रश्नः—व्यभिचारिभावानां केषाञ्चित् पञ्चानां लक्षणोदाहरणे वर्णयत । ( सं० सं० विश्व० १९७६ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने विभावानुभावनिरूपणानन्तरं व्यभिचारिभावनिरूपणप्रसङ्गात् समर्थितोऽस्ति । के पुनः व्यभिचारिभावाः व्यभिचारिणो वेति जिज्ञासायां ग्रन्थकारः प्रोवाच । तद्यथा—

हर्ष-स्मृति-व्रीडा-मोह-धृति-शङ्का-ग्लानि-दैन्य-चिन्ता-मद-श्रम-गर्व-निद्रा-मति-व्याधि-त्रास-सुप्त-विबोधा-ऽमर्षा-ऽवहित्थो-ग्रतोन्माद-मरण-वितर्क-विषादौत्सुक्याऽऽवेग-जडता-ऽऽलस्या-ऽसूया-ऽपस्मार-चपलताः । प्रतिपक्षकृतधिक्कारादिजन्मा—निर्वेदश्चेति त्रयस्त्रिंशद् व्यभिचारिणः । गुरु-देव-नृप-पुत्रादिविषया रतिश्चेति चतुस्त्रिंशत् । एषु व्यभिचारिभावेषु क्रमेण पञ्चानां व्यभिचारिणां लक्षणोदाहरणे यथा—

( १ ) तत्रादौ हर्षस्य—'इष्टप्राप्त्यादिजन्मा सुखविशेषो हर्षः ।

अभिलषितवस्तुनः प्राप्त्यादिभिः यत्सुखमुत्पद्यते, सः हर्ष इति कथ्यते । ननु लक्षणे आदिपदनिवेशेन विभावैः सहास्यानुभावान् दर्शयितुमुपक्रमते । तद्यथा—

'देव-भर्तृ-गुरुस्वामिप्रसादः प्रियसङ्गमः ।
मनोरथाप्तिरप्राप्य मनोहरधनागमः ॥
तथोत्पत्तिश्च पुत्रादेर्विभावो यत्र जायते ।
नेत्रवक्त्रप्रसादश्च प्रियोक्तिः पुलकोद्गमः ॥
अश्रुस्वेदादयश्चानुभावा हर्षं तमादिशेत् ।'

अत्रायं निष्कर्षः—देवता-पति-गुरु-स्वामिनाञ्च प्रसादः, प्रियसमागमः, वाञ्छितवस्तुनः प्राप्तिः, दुर्लभस्य लोभोत्पादकस्य च धनस्य लाभः, पुत्रादीनां जननं—यस्य विभावाः भवन्ति, नेत्रस्य ( नेत्रयोः ) मुखस्य च प्रसन्नता, प्रियवचनं, रोमाञ्चः अश्रु-प्रस्वेदादयो येषामनुभावाः भवन्ति, स हर्ष इति कथ्यते ।

उदाहरणञ्च यथा—नायकः स्वमित्रं प्रति कथयति—

'अवधौ दिवसावसानकाले, भवनद्वारि विलोचने दधाना ।
अवलोक्य समागतं तदा मामथ रामा विकसन्मुखी बभूव ॥'

अस्मिन् पद्ये—अवधिकाले प्रियागमनं विभावः, मुखविकासोऽनुभावः ।

( २ ) स्मृतेर्लक्षणोदाहरणे यथा—संस्कारजन्यं ज्ञानं स्मृतिः । अत्रायं

भावः—केषामपि वस्तूनां दर्शनात्मक-श्रवणात्मिकादिज्ञानेन यः संस्कारः उत्पद्यते, तेन संस्कारेण च यज्ज्ञानं भवति, तन्नाम स्मृति इति। दार्शनिकानां चिन्तनमस्ति यत्—सर्वविधानि ज्ञानानि ( अपेक्षाबुद्धि परित्यज्य ) क्षणत्रयं तिष्ठन्ति, अतः ज्ञानं स्मरणं प्रति कारणं न भविष्यति, अतः अनुभवजन्य-संस्कारादुत्पन्नं ज्ञानं स्मरणमिति कथितम्। उदाहरणञ्च यथा—

'तन्मञ्जु मन्दहसितं श्वसितानि तानि
सा वै कलङ्कविधुरा मधुराऽऽननश्रीः।
अद्यापि मे हृदयमुन्मदयन्ति हन्त!
सायन्तनाम्बुजसहोदरलोचनायाः ॥'

अस्मिन् पद्ये—चिन्ताविशेषो विभावः, भ्रूनति-गात्रनिश्चलत्वादय आक्षेप-गम्या अनुभावाः।

( ३ ) सम्प्रति व्रीडानिरूपणमुपस्थाप्यते—

'स्त्रीणां पुरुषमुखावलोकनादेः, पुंसां च प्रतिज्ञाभङ्गपराभवादेरुत्पन्नो वैवर्ण्याधोमुखत्वादिकारणीभूतश्चित्तवृत्तिविशेषो व्रीडा।

उदाहरणञ्च यथा—

'कुचकलशयुगान्तर्मामकीनं नखाङ्कं
सपुलकतनु मन्दं मन्दमालोकमाना।
विनिहितवदनं मां वीक्ष्य बाला गवाक्षे
चकितनतनताङ्गी सद्म सद्यो विवेश ॥'

अस्मिन् पद्ये—प्रियस्य दर्शनम्, तेन नायिकाकर्तृकतत्कुचान्तर्वर्ति-प्रियनखक्षतावलोकनजन्यहर्षविदक-तत्पुलकादेर्दर्शनं च विभावः। सद्यः सदन प्रवेशोऽनुभावः।

( ४ ) मोहस्य निरूपणं यथा—भयवियोगादिप्रयोज्या वस्तुतत्त्वान धारिणी चित्तवृत्तिर्मोहः। नवीनानां मते च—अवस्थान्तरशबलिता तथा—इति तु नव्याः।

अर्थात्—चिन्ता यदा चरमावस्थायां प्राप्य यदा ज्ञानविमुखाः भव जनाः, तदा तां 'मोह' इति कथयन्ति, अतश्चिन्तया पृथक् मोहस्य गणनैव भविष्यति। उदाहरणत्वेन बालाया मोहावस्थाव्यापारं वर्णयति कविः—

'विरहेण विकलहृदया, विलपन्ती दयित! दयितेति।
आगतमपि तं सविधे, परिचयहीनेव वीक्षते बाला ॥'

अस्मिन् पद्ये—कान्तावियोगो विभावः, इन्द्रियवैकल्यं लज्जाद्यभावश्चानुभावः ।

( ५ ) धृति-निरूपणं यथा—'लोभशोकभयादिजनितोपप्लवनिवारणकारणीभूतश्चित्तवृत्तिविशेषो धृतिः । एतदुदाहरणं यथा—

'सन्तापयामि हृदयं, धावं धावं धरातले किमहम् ।
अस्ति मम शिरसि सततं, नन्दकुमारः प्रभुः परमः ॥'

अस्मिन् पद्ये—विवेकश्रुतसम्पत्त्यादिर्विभावः, चपलाद्युपशमोऽनुभावः ।

नन्वत्र शङ्कते यत्—'ननु चोत्तरार्धे चिन्ता नास्तीति वस्तुनोऽभिव्यक्तेः कथमस्य धृतिभावध्वनित्वमिति चेत्' । उत्तरयति—तस्य धृत्युपयोगितयैवाभिव्यक्तेः । निष्कर्षश्चात्र—चिन्ताया अभावः धैर्ये उपयोगी भवति । अतस्तद्ध्वननं धृतेः ध्वनौ सहायक एव, न तु बाधकः । इत्यलं पल्लवितेन ।

( ३१ ) प्रश्नः—सोदाहरणं स्मृतिभावमुद्भाव्य तस्य तदादिपदवाच्यत्वेऽपि व्यक्तिवेद्यत्वं तस्य साध्यताम् । ( सं० सं० वि० वि० १९८३ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने प्रसङ्गप्राप्तानां हर्षादि त्रयस्त्रिंशत् चतुस्त्रिंशद् वा भावानां ( व्यभिचारिभावानाम् ) मध्ये द्वितीयो व्यभिचारिभावः स्मृतिरस्ति । तस्याः स्मृतेः लक्षणं यथा उक्ते ग्रन्थे—

'संस्कारजन्यं ज्ञानं स्मृतिः ।'

अत्रायम्भावः—केषामपि वस्तूनां दर्शनात्मक-श्रवणात्मकादिज्ञानेन हृदि यः संस्कारः उत्पद्यते, तेन संस्कारेण च यज्ज्ञानं भवति तन्नाम 'स्मृतिः' । दार्शनिकानां विचारानुसारं ज्ञानानि क्षणत्रयं तिष्ठन्ति एतेनेदमायातं यत् ज्ञानं स्मरणं प्रति कारणं न वेदितव्यम् । अतोऽनुभवजन्यसंस्कारादुत्पन्नं ज्ञानं स्मरणमिति कथितं बुधैः । तदुक्तम्—स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते इति ।

एतस्याः स्मृतेः उदाहरणं यथा—( नायको मनसि विमृशति )

'तन्मञ्जु मन्दहसितं श्वसितानि तानि,
सा वै कलङ्कविधुरा मधुराऽऽननश्रीः ।
अद्यापि मे हृदयमुन्मदयन्ति हन्त !
सायन्तनाम्बुजसहोदरलोचनायाः ॥'

द्वितीयचरणान्ते समुच्चयार्थश्चकार आक्षेप्यः, अथवा 'गामश्वं पुरुषं पशुम्' इत्यत्रेव तदर्थप्रतीतिर्बोध्या ।

उपर्युक्तपद्यस्यायमाशयः—कश्चिन्नायकः स्वमनसि विचारयति, अथवा कमपि मित्रं प्रति कथयति यत्—सायन्तनकमलानामिवार्धनिमीलितनयनायाः प्रेयस्याः प्रफुल्लितो मन्दहासः, ते श्वासाः, सा निष्कलङ्का मधुरा च मुखस्य शोभा, हन्त ! अद्यापि मम हृदयमुन्मदयन्ति ।

अस्मिन् पद्ये चिन्ताविशेषः विभावोऽस्ति, भ्रूलताया उन्नयनं, शरीरस्य निश्चलीभावादयो ये वाच्याः न सन्ति तथाप्याक्षेपेण ज्ञाने समायान्ति ते अनुभावाः सन्ति ।

यद्यप्यत्र नायिकारूपो विभावः 'हन्त' अथवा 'हाय' इत्येताभ्यां पदाभ्यां प्रकटितस्य हृदयस्य विकलतारूपोऽनुभावः स्मृतिरूपस्य सञ्चारीभावस्य च संयोगात् विप्रलम्भश्रृङ्गारस्या( रसस्य )भिव्यक्तिर्भवति, अतोऽत्र रसध्वनि- विद्यते । एतत्कथनं समुचितं स्यात्, तथापि भावध्वनिः एतदर्थं कथित यत्—प्रथमं स्मृतेः एव प्रतीतिर्भवति, चमत्कारिणी चापि, भवतु नाम; उक्ते रसोऽपि ध्वनितो भवेत्, तद्भवतु नाम, परञ्च तत्र तावान् चमत्कारो भविष्यति ।

नन्वत्र शङ्कते यत्—तच्छब्दस्य बुद्धिविषयीभूतार्थवाचकत्वाद् बुद्धिविशेष रूपायाः स्मृतेरपि तद्वाच्यतया कथमिह स्मृतिध्वनित्वमित्याशङ्कां मतद्वये समादधाति । तद्यथा ग्रन्थकारमुखेन—

'तदादेर्बुद्धिस्थप्रकारावच्छिन्ने शक्तिरिति नये बुद्धेः शक्यतावच्छेदका गमकतया न वाच्यतासंस्पर्शः । बुद्धिस्थत्वं शक्यतावच्छेदकमिति नयेऽ स्मृतित्वेन स्मृतेर्व्यक्तिवेद्यतैव ।

अत्रायमभिप्रायोऽस्ति यत् तत्पदस्य घटपटादयोऽनेके अर्थाः सन्ति, त हरिप्रभृतिपदस्येव सोऽपि नानार्थकः कथं न स्वीकुर्यात् ? अयं प्रश्नः य समुत्थितस्तदा सर्वैः दार्शनिकैः समवेतस्वरेण समाधानं कृतं यत्—अर्थस्याने त्वात् किमपि पदं नानार्थकं न भवति । किन्तु कस्मिन्नपि पदे अनेका निरूपणेऽनेकशक्तिस्वीकारे तत्पदं नानार्थकं भवति, यदि कस्मिन्नपि पदेऽ कार्थनिरूपणेऽपि शक्तिः एकैवास्ति । तदा तत्पदम् एकार्थकमेव भवति, शक्त श्चैकीकरणस्येमे नियमाः सन्ति, यद् यदि शक्यमेकं स्यात् तदा शक्तिरे यदि शक्यमनेकान्यपि स्युः शक्यतावच्छेदकश्चैको भवेत् तदापि शक्तिः ए यदि सोऽपि अनेक एव स्युस्तदापि शक्यतावच्छेदकतावच्छेदकस्यैकेऽपि श एक एव भवति । तथ्यमिदमस्ति यत् शक्यस्यानुवर्ती यदि क्वापि कोऽप्य गमनैकधर्मः स्यात् तदा शक्तिरेका भवति । तदापि प्रश्नः जागर्ति यत् त

शक्तिरेकाऽस्त्यनेका वा ? अस्योत्तरं सर्वैः समानमेव प्रदत्तं यत्—एका। कथमिति विमर्शे सति। अत्र दार्शनिकानां मतद्वये केषाञ्चन मतमस्ति यद् बुद्धिस्थो यः प्रकारः तदवच्छिन्ने तद्विशिष्टे वा तत्पदस्य शक्तिरस्ति। यथा—घटत्व-पटत्वादिप्रकारं बुद्धिस्थे कृते सति तद्विशिष्टे घट-पटादौ तत्पदस्य शक्तिर्भवति। एतन्मतानुसारं तत्पदेन घटपटादीनां बोधः असाधारणे घट-पटादिरूपे एव भवति।

इत्थमस्मिन् विषये दार्शनिकानां महती शास्त्रार्थपरम्परा विद्यमानास्ति। परञ्चात्र प्रस्तुते विषये नैषा सरणिः विद्यते, अर्थाद् बुद्धित्वं स्मृतित्वञ्चैकं नास्ति, अनयोर्द्वयोः सामान्यविशेषभावोऽस्ति, अतः गुणत्व-ज्ञानत्वयोः यथा द्वयोः द्वौ धर्मौ स्तः, पुनः बुद्धित्वेन रूपेण वाच्ये सम्भवेऽपि स्मृतित्वेन व्यङ्ग्ये का आपत्तिर्भविष्यति, विरोधो वा कीदृशः, अपि तु न काप्यापत्तिर्न वा कोऽपि विरोधः। पर्यन्ते स्मृतेः पदप्रकाश्यत्वव्यवस्थापनं यथा—तस्याश्चात्र वाक्यवेद्यत्वेऽपि पदस्यैव कुर्वद्रूपत्वात् पदध्वनिविषयत्वम्। एतेन भावानां पद-व्यङ्ग्यत्वे न वैचित्र्यमिति परास्तम्। अलमतिपर्यालोचनेनेति दिक्।

( ३२ ) प्रश्नः—'तदादेर्बुद्धिप्रकारावच्छिन्ने शक्तिरिति नये बुद्धेः शक्यतावच्छेदकानुगमकतया न वाच्यतासंस्पर्शः। बुद्धिस्थत्वं शक्यतावच्छेदकमिति नयेऽपि स्मृतित्वेन, स्मृतेर्व्यक्तिवेद्यतैव इत्यनुच्छेदः सप्रसङ्गं व्याख्येयः। ( सं० सं० वि० १९८४ )

**उत्तरम्**—तत्रादौ प्रसङ्गः—प्रस्तुतोऽयमनुच्छेदः पण्डितराजविरचितस्य रसगङ्गाधरस्य प्रथमानने चर्चितोऽस्ति। अनुच्छेदोऽयं त्रयस्त्रिंशत् चतुस्त्रिंशद् वा व्यभिचारिभावानां वर्णनावसरे स्मृतेः लक्षणं ग्रन्थकृता कृतं यत्—'संस्कारजन्यं ज्ञानं स्मृतिः' इति, तदुदाहरणञ्च तत्र निर्दिष्टं यत्—

'तन्मञ्जु मन्दहसितं श्वसितानि तानि,
सा वै कलङ्कविधुरा मधुराऽऽननश्रीः।
अद्यापि मे हृदयमुन्मदयन्ति हन्त !
सायन्तनाम्बुजसहोदरलोचनायाः ॥'

प्रस्तुतेऽस्मिन् उदाहरणे प्रथमतः चर्चितस्य तत्पदस्यार्थमभिलक्ष्य नैयायिकानां मतद्वयं वर्तते। द्वयोः मतयोः उपस्थापनावसरे ग्रन्थे कारणमाह—'ननु तच्छब्दस्य बुद्धिविषयीभूतार्थवाचकत्वाद् बुद्धिविशेषरूपायाः स्मृतेरपि तद्वाच्यतया

कथमिह स्मृतिध्वनित्वमित्याशङ्कां मतद्वयेन समादधाति। तच्च यथा—उपर्युक्तोऽयमनुच्छेदः 'तदादेर्बुद्धिप्रकारावच्छिन्ने शक्तिरिति' इत्यादि।

अत्रायमभिप्रायः—तत्पदस्य घटपटादयो बहवोऽर्था भवन्ति। अस्यां स्थितौ यथा 'हरिशब्दस्य' 'अर्क-मर्कट-मण्डूक-विष्णु-वासव-वायवः' इत्याद्यनेकार्थाः स्वीकृतास्तद्वत् तत्पदोऽपि नानार्थकः कथं न स्वीकुर्यात् ? अस्यामवस्थायां दार्शनिकाश्चिन्तिताः बभूवुः, समवेतस्वरेणोचुश्च—अर्थस्यानेकत्वसम्भवात् किमपि पदं नानार्थकं न भवति, किञ्च कस्मिन्नपि पदेऽनेकार्थनिरूपितानेकशक्तिस्वीकारात् तत्पदं नानार्थकं भवति। यदि कस्मिन्नपि पदेऽनेकार्थाः निरूपिताः सन्तोऽपि शक्तिः एकैव स्यात्, तदा तत्पदं एकार्थक एव भवति। तथा चोक्तं वृत्तौ—'न च तथापि शक्यताऽवच्छेदकभेदाच्छक्तिभेदः शक्यताऽवच्छेदकानां नानात्वेऽपि तेषामनुगमकस्य बुद्धिविषयताऽवच्छेदकत्वरूपस्योपलक्षणधर्मस्यैक्याच्छक्तेरैक्यमेव, न तु नानात्वम्; इत्यस्मिन् प्रथममते बुद्धेः शक्यतावच्छेदकानुगमकधर्मकुक्षिप्रवेशेऽप्युपलक्षणतया वाच्यत्वाभावाद् ध्वन्यमानत्वमक्षतमेव। तच्छब्दस्य बुद्धिविषयत्वावच्छिन्ने शक्तिरिति मतेऽपि बुद्धित्वेन सामान्यधर्मेण स्मृतेर्वाच्यतायामपि स्मृतित्वेनासाधारणधर्मेणा वाच्यत्वाद् ध्वनित्वे न किञ्चिद् बाधकमिति द्वितीयमतेऽपि दोषाभावो बोध्यः।

प्रथममतस्य सारांशोऽयं वर्तते यत्—उपर्युक्तोऽयमनुगमकः उपस्थितस्य कस्यापि पदस्य सामर्थ्ययुक्तः ( शक्यः ) न विगण्यते। किञ्च बुद्धिस्थसमन्वितं शक्यतावच्छेदकमिति द्वितीयं मतम्। उभयोः स्थानयोः 'तत्पदेन' 'बुद्धिस्थमि'त्यस्य परामर्शो भवति। इत्यलं पल्लवितेनेति दिक्।

( ३३ ) प्रश्नः—भावसन्धि-भावशबलतयोरेकतरं सोदाहरणं विवृणुत। ( सं० सं० वि० वि० १९९० )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने भावशान्ति-भावोदययोर्निरूपणानन्तरं भावसन्धिनिरूपणप्रसङ्गे सम्बन्धितोऽस्ति। तत्र तल्लक्षणं यथा—

'भावसन्धिरन्योन्यानभिभूतयोरन्योन्याभिभवनयोग्ययोः सामानाधिकरण्यम्।

अत्रेदं तात्पर्यमस्ति यत्—ययोर्द्वयोर्भावयोः कोऽप्येकोऽन्यस्य प्रतीतिं चमत्कारञ्च बाधितुं क्षमता भवेत्, परञ्च बाधां न कुर्यात्, एतादृशोर्द्वयोरविरुद्धयोः तुल्यबलयोर्द्वयोर्भावयोः सहस्थितिं भावसधिरिति कथयन्ति तज्ज्ञाः। यत्

लक्षणे—'अन्योन्यं परस्परमनभिभूतयोः' इत्येषः पूर्वांशः कथितो न भवेत् तदा तयोर्द्वयोर्भावयोः सहास्यैतावतिव्याप्तिर्भविष्यति, यौ ( भावौ ) परस्पर-बाधकौ तस्मात् अप्रतीयमानौ—अत एव चमत्कारहीनौ तटस्थौ भवतः। अनेनैव प्रकारेण यद्येकोऽन्यं मर्दनयोग्यतासम्पन्नौ स्यातामित्येतद् द्वितीयांशं लक्षणे न स्थापयेताम्, तदा तयोरङ्गाङ्गिभावापन्नयोर्द्वयोर्भावयोः सहस्थिता-वव्याप्तिर्भविष्यति। ययोः सहस्थित्या कोऽपि नवीनश्चमत्कारः नोत्पद्यते। अतः द्वयोरंशयोर्निवेशः सार्थक इति मन्तव्यः।

अत्रोदाहरणं यथा—

'यौवनोद्गमनितान्तशङ्किताः शीलशौर्यबलकान्तिलोभिताः।
सङ्कुचन्ति विकसन्ति राघवे, जानकीनयननीरजश्रियः॥'

प्रस्तुतेऽस्मिन् पद्ये वयस्सन्धिं समागताया अविवाहितायाः सीताया रामचन्द्रे प्रथमदृक्पातवर्णनं विद्यते।

एका सखी अन्यां सखीं कथयति, तद्भावार्थोऽयमस्ति यत्—नवाङ्कुरोद्गमा सीता यदा प्रथमतः यौवनोन्मुखं, सच्चरित्रं, वीरं बलिष्ठं सुन्दरञ्च राममपश्यत्, तदा तच्चक्षुषी तद्दर्शने सङ्कुचिते बभूवतुः, यतस्तद्धृदये तत्समये एका शङ्का उपस्थिताऽऽसीत्। या कमपि नवीनं युवानं दर्शनावसरे कस्यै अपि—अङ्कुरितयौवनायै स्वाभाविकी विद्यते। किञ्चिद्विकसितमप्यासीन्मुखम्। यतो हि तादृशं विलक्षणं यौवनोन्मुखं रामं प्रति तस्याः मनसि लोभोऽप्यासीत्।

अत्र विभावादिप्रदर्शनं यथा—'भगवद्दाशरथिगतस्य लोकोत्तरयौवनोद्गमस्य, तादृशस्यैव शीलशौर्यादेश्च दर्शनं विभावः, नयनगतसङ्कोचविकासावनुभावः, व्रीडौत्सुक्ययोः सन्धिर्व्यङ्ग्यः।

अतोऽमिन् उदाहरणे भावसन्धिध्वनित्वं पर्यवस्यति।

( ३४ ) **प्रश्नः**—भावशबलत्वलक्षणमुपन्यस्य तेषूपमर्दोपमर्दकभावः समुचितो न वेति प्रकाश्यताम्। ( सं० सं० विश्व० १९८७ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमाननस्य पर्यन्ते भावसन्धिनिरूपणानन्तरं भावशबलत्वप्रकरणात् सम्बन्धितोऽस्ति। तत्र भावशबलत्वलक्षणं यथा—

'भावशबलत्वं भावानां बाध्यबाधकभावमापन्नानामुदासीनानां वा व्यामिश्रणम्'।

अत्रायमाशयः—भावध्वनिनिरूपणानन्तरं भावशान्ति-भावोदय-भावसन्धि-भावशबलतानां निरूपणक्रमो वर्तते। ये परस्परविरोधिनो भावाः एकोऽन्यस्य बाधकाः स्युः, अथवा ये उदासीनाः—परस्परबाधकाः न वा परस्परसहायकाः स्युः, एतादृशानामनेकभावानां मिश्रणं 'भावशबलता' इति कथयन्ति।

शबलत्वं च—'एकचमत्कृतिजनकज्ञानगोचरत्वमिति यावत्'। अत्रायम्भावः—मिश्रणशब्दस्यार्थोऽत्रायमस्ति यत्—यद्यपि भिन्न-भिन्नवाक्यैः भिन्न-भिन्नभावाः अभिव्यक्ताः भवन्ति, तथापि तानि सर्वाणि वाक्यानि सम्मेल्य एकं सम्पूर्णं पद्यरूपं महावाक्यं स्यात्, तेन यदेकं व्यञ्जनावृत्त्या सहयोगेन चमत्कारिकं ज्ञानं स्यात्, तस्मिन् तद्भावानां भासितत्वम्।

एतदुदाहरणञ्च यथा—

'पापं हन्त मया हतेन विहितं, सीताऽपि यद्यापिता,
सा मामिन्दुमुखी विना बत वने किं जीवितं धास्यति।
आलोकेय कथं मुखानि कृतिनां, किं ते वदिष्यन्ति मां,
राज्यं यातु रसातलं पुनरिदं, न प्राणितुं कामये॥'

प्रस्तुतेऽस्मिन् पद्ये सीतां विवास्यानुशयानस्य श्रीरामस्य चिन्तनं विद्यते यत्—यज्ञभूमिसमुत्पन्ना वह्निपरीक्षितशीला सीताऽपि (क्षुद्रापवादभिया) यत्, यापिता राजधान्या निष्कास्य वनं गमिता, हन्त! हतेन दुष्टेन दुर्दैवोपहतबुद्धिना वा मया तत् सीतानिर्वासनं पापं कृतमभिधेय विहितमित्यादि विलापः श्रीरामेण बहुशः कृतः।

अत्रोपपादनं यथा—'मत्यसूया-विषाद-स्मृति-वितर्क-व्रीडा-शङ्का-निर्वेदानां प्रागुक्तस्वविभावजन्मनां शबलता।'

अत्र स्व-स्वविभावैः अभिव्यक्तानां मति-असूया-विषाद-स्मृति-निर्वेदादीनाञ्चैतेषां भावानां मिश्रणमस्ति। एषां सर्वेषां भावानाञ्च समग्रे श्लोकजन्यबोधे प्रतीतिर्भवति, अतः इयम्भावशबलता ध्वनिर्जाता।

**उपमर्दोपमर्दक-भावविचारः—**

क्रमप्राप्तेऽस्मिन् विषये—काव्यप्रकाशव्याख्यातृ-कृतं भावशबलत्वलक्षणमुद्दिश्य विचारः समुदेति। तथा चोक्तं रसगङ्गाधरे यथा—

'यत्तु काव्यप्रकाशटीकाकारैः—उत्तरोत्तरेण भावेन पूर्व-पूर्वभावोपमर्दः शबलता' इत्यभ्यधीयत, तन्न; 'पश्येत् कश्चिच्चल चपलरे! का त्वराहं कुमारी, हस्तालम्बं वितर, हहहा! व्युत्क्रमः क्वासि यासि'। इत्यत्र शङ्काऽसूया-धृति-

स्मृति-श्रम-दैन्य-मत्यौत्सुक्यानामुपमर्दलेशशून्यत्वेऽपि शबलताया राजस्तुति-गुणत्वेन पञ्चमोल्लासे मूलकृतैव निरूपणात् ।

अत्रेदं मूलतात्पर्यमस्ति यत्—यदि टीकाकर्तॄणां मतानुसारमुत्तरोत्तर-भावैः पूर्व-पूर्वभावानामुपमर्दं शबलतारूपेण स्वीकुर्यात् तदा पूर्वोक्तरीत्या 'भावशबलताऽत्र राजस्तुतेरङ्गमस्ति, एतन्मूलकारस्य कथनमसङ्गतं भवेत्; यतो हि—उक्त-भावाः एकोऽन्यस्य लेशमात्रमपि उपमर्दं न कुर्वन्ति । अत-स्तेषां मतेनात्र शबलता प्राप्तैव नहि, पुनस्तस्या अङ्गत्वं कथं सम्भवः ? फलतः मूलकारस्य कथनेनैव विरुद्धत्वात् टीकाकारस्योक्तं कथनं सर्वथाऽमान्य-मस्ति । अत्रेयमभिसन्धिर्निराकरणञ्च ग्रन्थकारः प्रकटयति । तत्र पूर्वं शङ्का-स्थानं यथा—'नन्वात्मविशेषगुणानां स्वोत्तरविशेषगुणनाश्यत्वस्य तार्किकै-रङ्गीकरणचित्तवृत्तिविशेषाणां भावानामिच्छादिवदात्मविशेषगुणत्वादुत्तरोत्तर-प्राबल्य—पूर्व-पूर्वभावाभिभावकत्वेन 'पश्येदि'त्यादावपि शङ्कादीनां मिथस्ताट-स्थ्यस्याभावादेककालिकाभिव्यक्त्यसम्भवाच्च कथं शबलत्वं स्यादिति मूल-विरोधस्तुल्य एवेति शङ्कां निराकरोति'—

'स्वोत्तरविशेषगुणेन जायमानस्तु नाशो न व्यङ्ग्यः, नवोपमर्दपदवाच्यः नापि चमत्कारी' ।

अतः निर्गलितोऽर्थोऽयमायातः; तद्यथा—

'नारिकेलजल-क्षीर-सिता-कदलमिश्रणे ।
विलक्षणो यथाऽऽस्वादो भावानां संहतौ तथा ॥'

( ३५ ) प्रश्नः—अधोलिखितेषु द्वावनुच्छेदौ सावतरणं व्याख्येयौ ।

( सं० सं० वि० १९८२ )

( क ) सोऽयं निगदितः सर्वोऽपि रसादिलक्षणो व्यङ्ग्यप्रपञ्चः स्फुटः प्रकरणे झटिति प्रतीतेषु विभावानुभावव्यभिचारिषु सहृदयतमेन प्रमात्रा सूक्ष्मेणैव समयेन प्रतीयत इति हेतु-हेतुमतोः पौर्वापर्य-क्रमस्या-लक्षणादलक्ष्यक्रमो व्यपदिश्यते ।

( ख ) 'एवमेतेषु गुणेषु रसमात्रधर्मेषु व्यवसितेषु मधुरा रचना ओजस्वी बन्धः' इत्यादयो व्यवहाराः आकारोऽस्य शूरः इत्यादि व्यव-हारवदौपचारिकाः इति मम्मटभट्टादयः ।

( ग ) यत्तु चित्रमीमांसायां 'वागर्थाविव सम्पृक्तौ'—इत्यत्र रस-

ध्वनिः निरतिशयप्रेमशालिताव्यञ्जनात् इति तद् ध्वनिमार्गानाकलन-निबन्धनम् ।

**उत्तरम्—प्रस्तुतोऽयं प्रथमोऽनुच्छेदः—**'सोऽयं निगदित' इति पण्डितराज-जगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने भावशान्त्यादिप्रकरणे 'ननु भावशान्त्यादिवद् रसशान्त्यादीनां निरूपणं कुतो न कृतमिति जिज्ञासासमाधा-नानन्तरमेषोऽनुच्छेदः समायाति। अयमनुच्छेदश्च ग्रन्थकार-प्रतिज्ञानुपूरकोऽस्ति। तद्यथा—'उपपादयिष्यते च स्थाय्यादीनामपि संलक्ष्यक्रमव्यङ्ग्यत्वम्' इति प्राक् प्रतिज्ञातां रसादीनां संलक्ष्यक्रमव्यङ्ग्यतामपि व्यवस्थापयति—'सोऽयं निगदितः सर्वोऽपि रसादिलक्षणो व्यङ्ग्यप्रपञ्च' इत्यादि ।

अत्रायमाशयः—सोऽयं पूर्वोक्तरसभावादीनां व्यङ्ग्यानां समुदायोऽस्ति, स च यत्र प्रकरणं स्पष्टं भवेत्—तत्र विभावानुभाव-सञ्चारिभावानां प्रतीतिः शीघ्रतयाऽवगमेनातिसहृदयान् पुरुषान् अतिस्वल्पसमये एव प्रतीतो भवति। अतः अनुभवकर्तारं सहृदयं कारणस्य कार्यस्य च पूर्वपरतायाः क्रमो न लक्ष्यते, एतदर्थं सोऽयं रसभावादिः 'अलक्ष्यक्रम' इति कथ्यते। परञ्च यत्र प्रकरणादि विचारानन्तरं ज्ञेयो भवेत् यत्र च प्रकरणे स्पष्टेऽपि विभावादीना-मवर्णनेनोहः कर्त्तव्यः तत्र सामग्रीसमवधानस्य विलम्बप्रयुक्तचमत्कारेऽपि कापि मन्थरता समायाति। अतः तादृशस्थले रसभावादिः उक्तव्यङ्ग्यानां समूहः संलक्ष्यक्रमोऽपि भवति। एवम्भूतं स्थलं दर्शयति; यथा—

'तल्पगताऽपि च सुतनुः' इत्यादौ पद्ये सम्प्रति इत्येतदर्थावगतिर्विलम्बेन'।

अत्रायम्भावः—अस्मिन् पद्ये 'सम्प्रति' पदस्यार्थः विलम्बेन जायते, इत्यनेन ज्ञातो भवति—अर्थात् पूर्वं नवोढात्वात् नायिकायां सङ्कोचस्य मात्राऽधिका-ऽऽसीत्, परञ्चाधुना प्रियगमनस्य पूर्वरात्रौ भाविविरहज्ञानस्य कारणात् सः सङ्कोचः शिथिलक्रमः सञ्जातः। इत्याद्यर्थस्य प्रतीतिः प्रकरणस्य विचारे कृते सत्यपि भवति। अतोऽत्र शृङ्गाररसः संलक्ष्यक्रमव्यङ्ग्य एव ।

**प्रश्नान्तर्गतस्य द्वितीयस्यानुच्छेदस्य 'ख'संज्ञकस्योत्तरम्—**

प्रस्तुतोऽयं—'एवमेतेषु गुणेषु रसमात्रधर्मेषु' इत्यनुच्छेदः पण्डितराजजग-न्नाथ-विरचितस्य रसगङ्गाधरस्य प्रथमानने चर्चितस्य गुणविवेचनप्रकरणात् गृहीतोऽस्ति। इति जिज्ञासायां यत्—'नन्वेवं गुणानां रसमात्रवृत्तित्वस्या-भ्युपगमे गुणविशिष्टरचनाबोधकाः 'मधुरा रचना' इत्यादिव्यवहारा गुणानां

रचनावृत्तित्वस्य विरहात् कथमुपपद्येरन्नित्याशङ्कां समादधत् प्राचीनमतमुपसंहरति—'एवमेतेषु गुणेषु रसमात्रधर्मेषु' इत्यादि ।

अत्रायमाशयः—इत्थमेषां गुणानां केवलं रसधर्मे सिद्धे सति—सहृदयानां रसिकानां 'रचना मधुरा भवति' 'बन्धः ओजस्वी' इत्यादि व्यवहारो भवति सः शूरोऽस्ति इति व्यवहारवत् लाक्षणिकोऽस्ति न च मुख्यः । अर्थात् शौर्यमात्मस्थितौ धर्मः, अवयवानां गठनं विशेषरूपाकारे न स्थास्यति तदाऽस्याकारः शूरः, इति व्यवहारमुपपन्नाय यथा लक्षणायाः आवश्यकता भवति, तेनैव प्रकारेण रसस्थितान् गुणान् रचनायां बन्धे च स्थापनाय लक्षणाया आश्रयणं क्रियते ( कर्त्तव्यमिति ), इति मम्मटभट्टादीनां प्राचीन-विदुषां मतमस्ति ।

उपर्युक्तं मतं खण्डनाय खड्गहस्तः पण्डितराजः प्राचीनमते—प्रत्यक्षप्रमाणाभावं दर्शयति, तद्यथा—

'येऽमी माधुर्यौजःप्रसादा रसमात्रधर्मतयोक्ताः तेषां रसमात्रधर्मत्वे किं मानम् ? प्रत्यक्षमेवेति चेत्, न; दाहादेः कार्यादनलगतस्योष्णस्पर्शस्य यथा भिन्नतयाऽनुभवः तथा द्रुत्यादिचित्तवृत्तिभ्यो रसकार्येभ्योऽन्येषां रसगतगुणानामननुभवात् ।'

अत्रायं निष्कर्षः—अग्नेः कार्यस्य दाहादेर्गुणस्य चोष्णस्पर्शादेर्भिन्नतया पृथगनुभवः, रसानां तु कार्यस्य द्रुत्यादेर्गुणस्य च माधुर्यादेरभिन्नतया न पृथगनुभव इति गुणानां रसवृत्तित्वे प्रत्यक्षप्रमाणाभावो बोध्य इत्यभिसन्धिः । इति ।

प्रश्नान्तर्गतस्य तृतीयस्यानुच्छेदस्य 'ग'संज्ञकस्योत्तरम् ।

प्रस्तुतोऽयं यत्तु चित्रमीमांसायाम्—'वागर्थाविव सम्पृक्तौ' इत्यनुच्छेदः पण्डितराज-जगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने चर्चितस्य शृङ्गाररसप्रकरणस्यानुच्छेदः । अनुच्छेदोऽयमप्पयदीक्षितदर्शितं सम्भोगशृङ्गारध्वनेरुदाहरणे दूषणस्यास्ति । यत्तु चित्रमीमांसायाम्—'वागर्थाविव सम्पृक्तावि'ति । इत्यत्र रसध्वनिः, 'निरतिशयप्रेमशालिताव्यञ्जनात्' इति तद्ध्वनिमार्गानाकलननिबन्धनम्, 'पार्वतीपरमेश्वरविषयक-कविरतौ प्रधाने निरतिशयप्रेम्णो गुणीभावात्' ।

अत्रायमाशयः—श्रीमताऽप्पयदीक्षितेन प्रदत्तस्य सम्भोगशृङ्गारोदाहरणस्य खण्डनं कुर्वन्ति रसगङ्गाधरकाराः पण्डितराजाः—यत्त्वित्यादिना । चित्रमीमांसायामप्पयदीक्षितेन सम्भोगशृङ्गारविषये यदुदाहृतं यत्—'वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये । जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥' अस्मिन् पद्ये शृङ्गार-

रसस्य ध्वनिर्विद्यते, यतो ह्यत्र—'वागर्थाविव सम्पृक्तौ' अर्थात् शब्दार्थयोरिव संश्लिष्टौ न कदापि असंश्लिष्टौ; अनया उपमया सर्वदा संश्लेषस्य कारणं शिवपार्वत्योः निरतिशयं प्रेम ध्वनितो भवति। स ध्वनिमार्गोऽज्ञानमूलकोऽस्ति। यतो ह्यस्मिन् श्लोके पार्वतीपरमेश्वरयोः विषये कवेः रतिः या 'भाव' इत्यभिधीयते—प्रधानोऽस्ति। शिव-पार्वत्योश्च परस्परं प्रेम व्यज्यमानः सन् अपि तस्याः ( कविनिष्ठायाः रतेः ) अपेक्षया गौणः।

उक्तस्यार्थस्य प्रकारान्तरेण समर्थनं यथा—

नहि गुणीभूतस्य रत्यादे रसध्वनिव्यपदेशहेतुत्वं युक्तम्, 'भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः' इति सिद्धान्तात्।

अत्रायम्भावः—गौणरत्यादिः 'अत्र रसध्वनिर्विद्यते' अस्य व्यवहारस्य हेतुर्न भविष्यति—अर्थात् गौणरत्यादिकमादाय रसध्वनिर्न भविष्यति कारणम्। अत्रायं सिद्धान्तोऽस्ति यत् 'भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः'। अर्थात्—अलङ्कारादिभिः यः रसः शोभितो भवति, सः रसभावादिकमलङ्कारकैः अलङ्काररूपरसादिभिः भिन्नोऽस्ति। अयमभिप्रायः विद्यते यत्—अप्रधानाः रसादयोऽलङ्काराः कथ्यन्ते, न च ध्वनिः। अतः उक्तस्थले ( वागर्थाविवेत्यत्र ) शृङ्गाररसः व्यङ्ग्यो भूत्वापि अलङ्कार एव भविष्यति, येन शिव-पार्वतीविषयकः कविनिष्ठभावः अलङ्कृतो भवति। फलतः पद्यमिदं भावध्वनेः उदाहरणं भवितुमर्हति, न तु रसध्वनेरिति।

( ३६ ) प्रश्नः—रसाभासलक्षणं तदुदाहरणञ्च प्रदर्श्य---'व्यानम्राश्चलिताश्चैव स्फारिताः परमाकुलाः। पाण्डुपुत्रेषु पाञ्चाल्याः पतन्ति प्रथमा दृशः॥' इत्यत्र किं व्यङ्ग्यमिति व्यवस्थापयत।

( सं० सं० विश्व० १९६५ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने भावध्वनिप्रकरणे रसाभासस्य लक्षणोदाहरणे विद्यते। पूर्वं तल्लक्षणं यथा—

'अनुचितविभावालम्बनत्वं रसाभासत्वम्।'

अत्रायम्भावः—यत्र रसस्यालम्बनविभावोऽनुचितो भवेत् तत्र तं रसाभास इति कथयन्ति। अनौचित्यं च किमिति जिज्ञासायाम्—

"विभावादावनौचित्यं पुनर्लोकानां व्यवहारतो विज्ञेयम्, यत्र तेषाम् 'अनुचितम्' इति धीरि"ति केचित्।

आलम्बनविभावस्यानौचित्यं लौकिकव्यवहारेण ज्ञातव्यम्, अर्थात्—यस्य विषये सहृदयानाम् 'अनुचितमिदमस्ति' इत्येषा बुद्धिः स्यात्, तमेव विभावमनुचितमिति जानीयात्। इति केषाञ्चन विदुषां मतमस्ति।

उपर्युक्तं मतमन्ये न क्षमन्ते, तद्यथा—

'तदपरे न क्षमन्ते, मुनिपत्न्यादिविषयकरत्यादेः सङ्ग्रहेऽपि बहुनायकविषयाया अनुभयनिष्ठायाश्च रतेरसङ्ग्रहात्। तत्र विभावगतानौचित्यस्याभावात्। तस्मादनौचित्येन रत्यादिर्विशेषणीयः। इत्थं चानुचितविभावालम्बनाया बहुनायकविषयाया अनुभवनिष्ठायाश्च सङ्ग्रह इति। अनौचित्यं च प्राग्वदेव।

अत्रायं निष्कर्षः—रसाभास-लक्षणे 'अनुचितमि'ति विशेषणं विभावेन संयोज्य रत्यादिस्थायिभावेषु संयोजनीयम्, अर्थात् एतल्लक्षणं भाव्यं यत्—यस्य रत्यादिस्थायिभावाः अनुचितरूपेण प्रवृत्ताः स्युः ते रसाभासाः भवन्ति। एतादृशे लक्षणे कृते सति सर्वरतीनां सङ्ग्रहो जायते, या मुनिपत्न्यादिविषये भवति, अनेकनायकविषये भवति, किं वा एकनिष्ठता भवेत्, यतः एषु त्रिषु लक्षणेषु रतेः प्रवृत्तिः अनुचितरूपेण भवति। अनौचित्यस्य परिभाषाऽस्मिन् मतेऽपि सैवास्ति। पुनरपि शङ्का जागर्त्ति यत्—रसाभास-भावाभासौ च रसभावावेव स्तः, अथवा तद्भिन्नः; अस्य प्रश्नस्योत्तरं मतभेदेन यथा—

'तत्र रसाद्याभासत्वं रसत्वादिना न समानाधिकरणम्, निर्मलस्यैव रसादित्वात्, हेत्वाभासत्वमिव हेतुत्वेन इत्येके। 'नह्यनुचितत्वेनात्महानिः, अपि तु सदोषत्वादाभासव्यवहारः, अश्वाभासादिव्यवहारवत् इत्यपरे।

अत्रायम्भावः—कतिपयविदुषां कथनमस्ति यद् रसाभासत्वं रसत्वञ्च तद्वद् भावाभासत्वं भावत्वञ्च एतयोर्द्वयोः सामानाधिकरण्यं नास्ति, अर्थात् रसाभासो रसः भावाभासश्च भावः नैव भवितुमर्हति, यतः रसोऽथवा भावः स एव भवितुमर्हति यः निर्मलो भवेत्। यस्मिंश्च कस्यापि प्रकारस्य अनौचित्यं न स्यात्, यदा च तस्मिन् अनौचित्यस्य प्रवेशः स्यात् तदा न स रसः न वा भावः कथनीयः, स्यान्नाम रसाभासः भावाभासश्च कथयेताम्। अत्र दृष्टान्तः समीचीनः—नैयायिकाः हेत्वाभासत्व-हेतुत्वयोश्च सामानाधिकरण्यं न स्वीकुर्वन्ति, हेत्वाभासं हेतुर्न कथयन्ति। अपरे विद्वांसः कथयन्ति यत्—रसे दोषे सम्प्राप्ते आत्महानिर्न भवति, अर्थात्—यथा निर्दुष्टाः स्थायीभावाः रसाः भवन्ति, तद्वत् सदोषा अपि रसा एव सन्ति।

रसाभासस्य त्रिषु प्रकारेषु प्रथमः यः खलु रतेरनुचितविभावकत्वाद् भवति, तस्योदाहरणं यथा—

'शतेनोपायानां कथमपि गतः सौधशिखरं,
सुधाफेनस्वच्छे रहसि शयितां पुष्पशयने।
विबोध्य क्षामाङ्गीं चकितनयनां स्मेरवदनां
सनिःश्वासं श्लिष्यस्यहह सुकृती राजरमणीम्' ॥

अत्रालम्बनमनुचितप्रणया राजरमणी। रहो रजन्याद्युद्दीपनम्। साहसेन राजान्तःपुरे गमनम्, प्राणेषूपेक्षा, निश्श्वासाश्लेषादयश्चानुभावाः। शङ्कादयश्च सञ्चारिणः। अत्र रतेः आलम्बनं—राजाङ्गना लोकशास्त्रनिषिद्धमस्ति, अतो रसः आभासरूपः सञ्जातः। एवमेव द्वितीयप्रकारस्य—'भवनं करुणावती विशन्ती'त्यादि तृतीयप्रकारस्य च 'भुजपञ्जरे गृहीते'त्याद्युदाहरणम्। ननु रसतदाभासयोरेकत्र स्थितिः स्यात् तदा किं व्यङ्ग्यमिति, यथा अत्र—

'व्यानम्राश्चलिताश्चैव, स्फारिताः परमाकुलाः।
पाण्डुपुत्रेषु पाञ्चाल्याः पतन्ति प्रथमा दृशः ॥'

अस्मिन् पद्ये—नव्यविदुषां कथनमस्ति यदत्र रसाभास एव व्यङ्ग्योऽस्ति, न तु रसः। किन्तु प्राचीनविदुषां मतेऽस्मिन् पद्ये रस एव व्यङ्ग्यः, न तु रसाभासः। तथा चाहुः ग्रन्थकाराः। 'प्राञ्चस्त्वपरिणेतृबहुनायकविषयत्वे, रतेराभासतेत्याहुः। इत्यलं पल्लवितेनेति दिक्।

( ३७ ) प्रश्नः—'भावशान्त्युदयसन्धिशबलताध्वनयो भावध्वनय एव' इति पण्डितराजसिद्धान्ते का वाचोयुक्तिः ? ( सं० सं० वि० १९८४ )

( अथवा )

भावशान्ति-भावोदयादिध्वनिषु भावस्य प्राधान्यं शान्त्यादीनां वेति सयुक्तिकं विवेचनीयम्।

उत्तरम्—प्रस्तुतावुभावपि प्रश्नौ पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य प्रथमानने ( पर्यन्ते ) चर्चितौ स्तः।

प्रथमन्तु जिज्ञासा भवति यद् भावशान्ति-भावोदय-भावसन्धि-भावशबलतादीनां किं स्वरूपमिति, स्वरूपनिरूपणानन्तरमेव ज्ञान भविष्यति यत् एताः ध्वनयो भावध्वनय एव। अत्र भावस्य प्राधान्यं भवति उत शान्त्यादीनामिति। एतज्जिज्ञासासमाधानार्थं प्रथमं भावशान्तेर्लक्षणोदाहरणे प्रस्तूयेते। तद्यथा—

'भावस्य प्रागुक्तस्वरूपस्य शान्तिर्नाशः ।

अर्थात्—प्रागुक्तं विभावानुभावव्यज्यमान-हर्षाद्यन्यतमत्वं स्वरूपं यस्य, विभावादिव्यङ्ग्यहर्षाद्यन्यतमनाश एव भावशान्तिर्निगद्यते ।

तत्रापि वैशिष्ट्यमिदमस्ति यत्—स चोत्पत्त्यवच्छिन्न एव ग्राह्यः, तस्यैव सहृदयचमत्कारित्वात् । उत्पत्तिकालीनभावनाश एव सहृदयान् चमत्करोतीत्याशयः । एतदुदाहरणं यथा—

'मुञ्चसि नाद्यापि रुषं भामिनि ! मुदिरालिरुदियाय ।
इति तन्व्याः पतिवचनैरपायि नयनाब्जकोणशोणरुचिः ॥'

इह विभावानुभावयोर्निदर्शनं यथा—अस्मिन् पद्ये घनघटायुक्तवचनानां श्रवणं विभावः, नेत्रकोणस्य रक्तच्छवेर्नाशोऽनुभावोऽस्ति । यदि कोऽपि कथयेत् नेत्रयोः रक्तिमायाः नाशस्तु रोषनाशस्य साक्षात् कार्यं न भविष्यति अर्थात् रोषनाशात् प्रसन्नता भविष्यति प्रसादेन च कोपमूलकनेत्ररक्ततायाः नाशः स्यात्, तदाहं कथयिष्यामि—उचितमेतत्, तदा नेत्ररक्तता-विनाशाभिव्यञ्जिकां प्रसन्नतामेवानुभावो भवेदिति । तात्पर्यमस्ति यत्—उक्तविभावानुभावैरुत्पत्तिसमय एव रोषस्य नाशो व्यङ्ग्यः । अन्यच्च—भावोदयस्य लक्षणोदाहरणे यथा—'भावोदयो भावस्योत्पत्तिः' । पूर्वोक्तेषु हर्षादिषु कस्यापि भावस्योत्पत्तिर्भावोदय इति सारांशः । यथा—प्रियापराधबोधात् सद्यो मानिन्या वृत्तं वर्णयति—

'वीक्ष्य वक्षसि विपक्षकामिनी-हारलक्ष्म दयितस्य भामिनी ।
अंसदेशवलयीकृतां क्षणादाचकर्ष निजबाहुवल्लरीम् ॥'

अस्मिन् पद्येऽपि—दयितवक्षोगत-विपक्षकामिनीहारलक्ष्मदर्शनं विभावः, प्रियासन्देशवलयीकृतनिजबाहुलताऽऽकर्षणमनुभावः, रोषोदयो व्यङ्ग्यः । साम्प्रतं भावशान्ति-भावोदययोर्विषयैक्यमाशङ्क्य विषयविभागं दर्शयति; यथा—'यद्यपि भावशान्तौ भावान्तरोदयस्य, भावोदये वा पूर्वं भावशान्तेरावश्यकत्वान्नानयोर्विविक्तो व्यवहारस्य विषयः, तथापि द्वयोरेकत्र चमत्कारविरहात्, चमत्काराधीनत्वाच्च व्यवहारस्य, अस्ति विषयविभाग इति ।

साम्प्रतं प्रसङ्गप्राप्त-भावसन्धिं निरूपयति । यथा—

'भावसन्धिरन्योन्यानभिभूतयोरन्योन्याभिभवनयोग्ययोः सामानाधिकरण्यम्' ।

अत्र तात्पर्यमिदमस्ति यत्—ययोर्द्वयोर्भावयोः कोऽप्येकोऽन्योन्यस्य प्रतीतिं चमत्कारं वा बाधस्य क्षमता भवेत्, किन्तु न बाधेत्, एवम्भूतयोः अविरुद्धयो-

तुल्यबलयोर्द्वयोर्भावयोः सहस्थिति 'भावसन्धिः' इति कथयन्ति साहित्य-शास्त्रविदः ।

अत्र लक्षणे तयोरङ्गाङ्गिभावापन्नयोर्द्वयोर्भावयोः सहस्थितौ अतिव्याप्ति-र्भविष्यति, ययोः सहस्थित्या न कोऽपि नवः चमत्कारः । अतः द्वयोः अंशयोः निवेशः सार्थकः । एतदुदाहरणं यथा—

वयस्सन्धिमारूढाया अनूढायाः सीताया रामचन्द्रे प्रथमं दृक्पातं वर्णयति—

'यौवनोद्गमनितान्तशङ्किताः, शीलशौर्यबलकान्तिलोभिताः ।
सङ्कुचन्ति विकसन्ति राघवे, जानकीनयननीरजश्रियः ।।'

भावशबलत्वं च यथा—भावशबलत्वं भावानां बाध्यबाधकभावमापन्ना-नानुदासीनानां वा व्यामिश्रणम् । उदाहरणञ्च—सीतां विवास्यानुशयानः श्रीरामश्चिन्तयति—

'पापं हन्त मया हतेन विहितं सीताऽपि यद्यापिता,
सा मामिन्दुमुखी विना बत वने किं जीवितं धास्यति ।
आलोकेय कथं मुखानि कृतिनां किं ते वदिष्यन्ति मां
राज्यं यातु रसातलं पुनरिदं न प्राणितुं कामये ।।'

अस्मिन् पद्ये—मत्यसूया-विषाद-स्मृति-वितर्क-व्रीडा-शङ्का-निर्वेदानां प्रागुक्त-स्वविभावजन्मनां शबलता ।

प्रश्नस्यान्तिमविषयस्योत्तरं यथा—भावशान्त्यादिध्वनिचतुष्टयस्य भाव-ध्वनितां व्यवस्थापयति । अत्रेदं बोध्यम्—'य एते भावशान्त्युदयसन्धिशबलता ध्वनय उदाहृताः, तेऽपि भावध्वनय एव, विद्यमानतया चर्व्यमाणेष्विव, उत्प-त्त्यवच्छिन्नत्वविनश्यदवस्थत्व-सन्धीयमानत्वपरस्परसमानाधिकरणत्वैः प्रकारैश्च-र्व्यमाणेषु भावेष्वेव प्राधान्यस्यौचित्यात्, चमत्कृतेस्तत्रैव विश्रान्तेः ।

यतश्चमत्कारमूलकमेव प्राधान्यं निर्णीतमिति भावानामेव प्राधान्य-मित्याशयः ।

( ३८ ) **प्रश्नः**—नामार्थस्थले प्रकरणादीनामेकार्थनियामकत्वमङ्गी-कर्त्तव्यं न वेत्यालोचयत । ( सं० सं० विश्व० १९८७ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने आदौ संलक्ष्यक्रमध्वनिनिरूपणप्रसङ्गात् सन्दर्भितोऽस्ति । तत्र विचारावसरे संलक्ष्यक्रमध्वनेः दश भेदाः भवन्ति, तेषु शब्दशक्तिमूलध्वनेः द्वौ भेदौ—अर्थशक्तिमूलध्वनेश्चाष्टौ भेदाः सम्भवन्ति ।

सम्प्रत्ययं विचारः समुपस्थितः यत्—आचार्यमम्मटादीनां प्राचीनालङ्कारिकानां मतमस्ति यत् शब्दशक्तिमूलध्वनेरुदाहरणं तत्रैव भवति यत्रानेकार्थकशब्दानामभिधाशक्तिप्रकरणादिना एकस्मिन्नर्थे नियन्त्रिता भवति, अर्थात्—तादृशस्थलेषु अप्राकरणिकोऽर्थः वाच्यो न भूत्वा शब्दनिष्ठव्यञ्जनावृत्त्या व्यङ्ग्यो भवति। तमेव शब्दशक्तिमूलध्वनिरिति कथयन्ति विज्ञाः। तत्रादौ नानार्थकशब्देभ्यः सम्भावितस्य बोधस्य रीतयः प्रतिपादिताः सन्ति। एतदेव प्रश्नस्य मुख्यो विषयः। तथा हि—

'तत्र केचिदाहुः—नानार्थस्य शब्दस्य सर्वेष्वर्थेषु सङ्केतग्रहस्य तुल्यत्वाच्छ्रुतमात्र एव तस्मिन् सकलानामर्थानामुपस्थितौ, शब्दस्यास्य कस्मिन्नर्थे तात्पर्यमिति सन्देहे च सति, प्रकरणादिकं तात्पर्यनिर्णायकं पर्यालोचयतः पुरुषस्य सति तन्निर्णये, तदात्मकपदज्ञानजाया एकार्थमात्रविषयायाः पुनः पदार्थोपस्थितेरनन्तरमन्वयबोध इति नये द्वितीयायाः पदार्थोपस्थितेः प्राथमिक्या इव न कुतो नानार्थगोचरतेति प्रकरणादिज्ञानस्य तदधीनतात्पर्यनिर्णयस्य वा पदार्थोपस्थितौ प्रतिबन्धकत्वं वाच्यम्, अन्यथा शाब्दबुद्धेरपि नानार्थविषयत्वापत्तिः।'

अत्रायम्भावः—नानार्थकशब्देषु समानरूपेण सर्वेषामर्थानां शक्तिर्ज्ञायते। जानीमो वयं यद् हरिशब्दः सूर्य-विष्णु-अश्व-सिंहादि सर्वेषामर्थानां वाचकोऽस्ति। 'अर्कमर्कटगण्डूक-विष्णु-वासव-वायवः। तुरङ्गहिमशीतांशुः' इत्यादि हरयो दश इति कोशे। अतस्तादृशानां शब्दानां श्रवणे सति तेषां सर्वेषामर्थानां स्मरणं सहैव भवति। पुनश्चायं सन्देहो जायते यत् वक्तुः तात्पर्यं कस्मिन् अर्थेऽस्ति? अभिप्रायोऽयमत्र वक्त्रा कस्यार्थस्य बोधायात्रास्य नानार्थकशब्दस्य प्रयोगः कृतः। सन्देहस्यास्य निवृत्त्यै श्रोता वक्तुः तात्पर्यं निर्णायकस्य प्रकरणस्यादेः पर्यालोचनां करोति येनोक्तसन्देहस्य निवृत्तिर्जायते। तदा निश्चितरूपेण ज्ञातो भवति यत्—वक्त्राऽत्रामुकनानार्थकपदस्य प्रयोगोऽमुकार्थस्य बोधायैव कृतोऽस्ति। अनन्तरञ्च तस्यैकमात्रार्थस्य प्रकरणपर्यालोचनेन वक्तृविवक्षित-ज्ञानं भवति। पुनः स्मृतिर्जायते। नन्वत्र यदि कोऽपि शङ्कते यत्—कस्याप्यर्थस्य स्मृतौ तस्यार्थबोधकपदस्य ज्ञानमभूत्, तच्च मध्ये कालातिपातव्यवधानेन नाशमेष्यति, यतोह्यपेक्षाबुद्ध्यातिरिक्तं ज्ञानं क्षणमात्रद्वयं स्थित्वा नश्यति। सर्वसम्मतोऽयं सिद्धान्तः। अस्यां स्थितौ पुनरर्थस्मरणं कुतः? एतत्समाधानं यथा—मध्येऽन्तराले यममुकपदममुकार्थस्य बोधाय—वक्ता वदति। इत्याकारकस्तात्पर्यनिर्णयोऽभूत्। तस्मिन् तत्सार्थकं पदमपि भासितं भवति। अतः

सः निर्णय एव पदज्ञानरूपो सिद्धो भवति। पुनस्तस्यार्थस्य स्मरणे न कापि बाधा भविष्यति। ततोऽन्वयबोधो भवति। नन्वत्रैका शङ्का भविष्यति यद्यथा—नानार्थकशब्दस्य श्रवणस्यावहितोत्तरक्षणे भाविप्रथमपदार्थस्मरणे तत्पदस्य सर्वेऽर्थाः विषयीभूताः भवन्ति।

अस्त्वेवमेतादृशः प्रतिबध्य-प्रतिबन्धकभावः न स्वीकुर्यात् तदा शाब्दबोधोऽपि तेषां समेषामर्थानां स्वीकर्तव्य एव यः सर्वथानुभवविरुद्धोऽस्ति।

अत एवोक्तम्—'अनवच्छेदे विशेषस्मृतिहेतवः' इति। अनवच्छेदे तात्पर्य-सन्देहे। विशेषस्मृतिरेकार्थमात्रविषया स्मृतिः। इति।

( ३९ ) प्रश्नः—'सौधानां नगरस्यास्य मिलन्त्यर्केण मौलयः' इत्यादौ वाच्यार्थाबाधितार्थबोधस्योपपत्तिः स्यात् इति सन्दर्भस्याशयमुपवर्ण्य अनुसरणीयेन यत्नेन इत्यभिदधता जगन्नाथेन कुत्रैतादृशो यत्नः कृतः ? कीदृशश्च सः इति निरूपयत ( सं० सं० विश्व० १९७५ )

**उत्तरम्**—प्रस्तुतप्रश्नस्य सन्दर्भः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने—संलक्ष्यक्रमध्वनिनिरूपणप्रसङ्गेऽस्ति। तत्र व्यञ्जनाया क्वाचित्कता विषये शङ्कासमाधानानन्तरं साम्प्रतं नानार्थकस्थले व्यञ्जनावादिनः पूर्वपक्षावलम्बिनः स्वपक्षसिद्धयर्थं नवीनाः युक्तयः ददति, तच्छङ्कास्वरूप यथा—'अथास्त्वप्राकरणिकोऽप्यर्थः शक्तिवेद्य एवान्वयधीगोचरः परन्तु यत्र न बाधितः स्यात्। यत्र तु बाधितस्तत्र 'जैमिनीयमलं धत्ते रसनायामयं द्विजः। इत्यादौ जुगुप्सितोऽर्थो वह्निना सिञ्चतीत्यादौ वह्निकरणकसेक इवाबोधोपहत एव स्यात्। बाधनिश्चयस्य तद्वत्ताज्ञानं प्रति प्रतिबन्धकतायाः सर्वजनसिद्धत्वात् व्यक्तेस्तु बाधितार्थबोधकत्वं धर्मिग्राहकमानसिद्धमिति व्यक्तिवादिनामदो इति।

अत्रायम्भावः—पूर्वपक्षवादिनां कथनमस्ति यत्—स्यात् भवत्कथनानुसारमप्राकरणिकार्थोऽपि—अभिधया बोध्यो भूत्वैवान्वयबोधस्य विषयोऽर्थात्—अप्राकरणिकार्थस्य बोधोऽपि अभिधयैव भवतु, परञ्च तत्रैवं स्यात् यत्राप्राकरणिकोऽर्थः बाधितो न स्यात्।

सारांशोऽयमत्र—सुरभिमांसं भक्षयतीत्यादौ अबाधितगोमांसस्य बोधोऽभिधया स्यादपि, परञ्च 'जैमिनीयमलम्' इत्यादौ जिह्वायां विष्ठाधारणरूप-बाधितार्थस्य बोधोऽभिधया कस्यापि प्रकारस्यापि न भवितुमर्हति। अतस्तद्-बोधाय व्यञ्जना स्वीकर्त्तव्यैव।

इत्युक्तशङ्कासमाधानार्थं समाधानमाह—

मैवं 'गामवतीर्णासत्यं सरस्वतीयं पतञ्जलिव्याजात्', '**सौधानां नगरस्यास्य मिलन्त्यर्केण मौलयः**'। इत्यादौ वाच्यार्थान्वियोपपादनायानुसरणीयेन यत्नेन नानार्थस्थलेऽपि बाधितार्थबोधस्योपपत्तिः स्यात्, अन्यथा प्रायशः सर्वेष्वप्यलङ्कारेषु वाच्यार्थबोधोपपत्तये व्यञ्जनाङ्गीकरणीया स्यात्।

**अत्रायमाशयः**—नानार्थकस्थले बाधिताप्राकरणिकार्थस्य बोधायापि व्यञ्जनाया आवश्यकता नास्ति, यतः पतञ्जलिव्याजात् सत्या सरस्वती पृथिव्यामवतीर्णा, अपि च—अस्य नगरस्य प्रासादानां शिखराणि सूर्येण मिलन्ति, इत्यर्थके मूले उद्धृतवाक्यानां सरस्वत्याः पृथिव्यामवतरणम्, प्रासाद-शिखराणाञ्च सूर्येण सङ्गमरूपोऽर्थाः बाधिताः सन्ति, अर्थादेतन्न भविष्यन्ति। अतः एतादृशस्थलेषु वाच्यार्थानामभिधया बोधसिद्ध्यै, यस्योपायस्यावलम्बनं भवति, तेनैव नानार्थकस्थलेष्वपि बाधितस्याप्राकरणिकार्थस्य बोधोऽभिधया सिद्धिर्भविष्यति, अन्यथा तस्योपायस्यावलम्बनं न कृते सति—प्रायः सर्वेष्वलङ्कारेषु वाच्यार्थानां बोधसिद्ध्यै व्यञ्जना स्वीकर्त्तव्या। सारांशोऽयमत्र यदलङ्कारप्रधानकाव्यानामधिकांशार्थाः बाधिता एव तिष्ठन्ति, बाधितेऽपि तेषामर्थानां बोधः सर्वेऽभिधयैव स्वीकुर्वन्ति, भवन्तोऽपि तथैव। तदा पुनः नानार्थकस्थले एव बाधिताप्राकरणिकार्थस्य बोधाय व्यञ्जनायाः आश्रयणं कथम्? अन्यच्च—बाधितार्थस्य बोधोऽभिधया कथं भवति, बाधनिश्चयः कथं न प्रतिबन्धयति। सारभूतोऽयमर्थः—बाधनिश्चयं शब्दजन्यबोधेनान्यबोधं प्रति प्रतिबन्धकत्वं स्वीकुर्यात्। आहार्ययोग्यताज्ञानञ्च स्वीकर्त्तव्यम्। तदनन्तरं बाधितस्यार्थस्यापि अभिधया बोधे न कापि बाधा वर्तते।

( ४० ) **प्रश्नः**—प्राचीनाभिमतं विरोधितोदाहरणं निराकुर्वतोऽप्पयदीक्षितस्य मतं पण्डितराजरीत्या निराकुरुत। ( सं० विश्व० १९७६ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने संलक्ष्यक्रमध्वनिनिरूपणप्रसङ्गात् सन्दर्भितोऽस्ति। तत्रादौ विरोधिताव्याख्यानं यथा—

"विरोधिता प्रसिद्धं वैरम्, सहानवस्थानञ्च। तत्राद्यस्य 'रामार्जुनौ' इत्युदाहरणं प्राञ्चो वदन्ति।"

**अत्रायमाशयः**—'ता' प्रत्ययो यस्याः प्रकृत्याः अग्रे भवति, तया प्रकृत्या भाविनि बोधे विशेषणीभूतो धर्म एव तस्य भाव-बोधकस्य 'ता' प्रत्ययस्यार्थो

भवति; अतः 'विरोधिता'याः शब्दार्थः विरोधो भवति। विरोधश्चात्र प्रकार-द्वयस्य विवक्षितोऽस्ति। एकः प्रसिद्धो वैरभावश्चापरः सहावस्थानाभावः। तयोर्द्वयोर्विरोधयोः प्रथमस्य प्रसिद्धवैरस्योदाहरणं 'रामार्जुनौ' वाक्यमिदमस्ति। इति प्राचीनाचार्याः कथयन्ति। वस्तुतः प्राचीनानां मम्मटादीनां ग्रन्थेषु 'विरोधितायाः' उदाहरणस्याकारः 'रामार्जुनगतिस्तयोः' अर्थात्—'तयोः गतिः रामार्जुनाविव' इत्युपलब्धा ( गतिः ) भवति। ग्रन्थकारेणापि तदाकार एव स्वीकृतः।

साम्प्रतमस्मिन् प्रसङ्गे दीक्षितोक्तं खण्डयितुमादौ तत्पक्ष-स्थापनं यथा—

'यत्त्वप्पयदीक्षितो वृत्तिवार्त्तिके प्राचामुदाहरणं निराकुर्वन्नाह—रामार्जुनपदयोर्वध्यघातकभावविरोधाद् भार्गवकार्त्तवीर्ययोरभिधा नियम्यत इति तदयुक्तम्। रामपदस्याभिधा नियमने सति तद्विरोधप्रतिसन्धानेनार्जुनपदस्य कार्त्तवीर्येऽभिधानियमनम्, तस्मिंश्च सति तद्विरोधप्रतिसन्धानेन रामपदस्येत्यन्योन्याश्रयापत्तेः, तस्मादन्यतरपदस्य व्यवस्थितार्थत्व एव स्मृतस्तद्विरोधप्रतिसन्धानान्नानार्थपदस्याभिधानियमनमिति रामरावणयोरित्युदाहरणं भवितुमर्हति' इति।

अत्रायम्भावः—दीक्षितमहाशयाः स्ववृत्तिवार्त्तिक-नामके ग्रन्थे प्राचीनोक्तोदाहरणस्य खण्डयन्तः कथयन्ति यत्—रामार्जुनयोः ( परशुराम-सहस्रबाह्वोः ) वध्यघातकभावरूपो विरोधोऽस्ति। अतः रामार्जुनयोः सह प्रयोगे सति एकोऽन्यस्याभिधायाः नियामको भवति। अर्थात् रामेति कथनेन परशुरामस्यैव बोधो भवति, न तु दशरथपुत्रादीनाम्। अनेनैव प्रकारेण 'अर्जुन' पदेन 'सहस्रबाहो'-रेव बोधो भवति, न तु पाण्डुपुत्रादीनाम्। इत्येतत् प्राचीनानां कथनं समुचितं न प्रतिभाति।

यतः यदा रामपदस्याभिधा परशुरामे नियन्त्रिता भविष्यति तदा तद्विरोधस्यानुसन्धानेऽर्जुनपदस्याभिधायाः नियमनं सहस्रबाहौ भविष्यति, अर्जुनपदस्याभिधायाः सहस्रबाहौ नियमने सति तद्विरोधस्यानुसन्धानेन रामपदस्याभिधायाः नियमनं परशुरामे भविष्यति। अनेन प्रकारेणैकपदस्याभिधाया नियमने द्वितीयपदस्याभिधायाः नियमनस्यापेक्षयाऽन्योन्याश्रयदोषस्य प्रसङ्गः समापतति। अतः विरोधितायाः तत्प्राचीनोक्तमुदाहरणमसङ्गतमस्ति। अतः एतद् ज्ञातव्यं यत्—यत्रैकपदं निश्चितार्थसमन्वितं स्यादर्थात् अनेकार्थको न भवेत्, अन्यत्पदश्चानर्थके सति अनिश्चितार्थयुक्तं भवेत्, तत्रैव निश्चितार्थकपदस्यार्थज्ञाने तद्विरोधे स्मरणेन नानार्थकपदस्याभिधायाः यन्नियमनं भविष्यति तदेव विरोधितायाः उदाहरण-

मस्ति, यथा 'रामरावणौ' अर्थादत्र रावणपदस्यार्थो निश्चितः तद्विरोधानुसन्धानेन रामपदस्याभिधा दशरथपुत्ररूपेऽर्थे नियन्त्रिता भवति।

**अधुना दीक्षितमतखण्डनं कुर्वन्ति पण्डितराजाः**, तद्यथा—

'तत्र तावद्राम-रावणयोरिति व्यवस्थितार्थान्यतरपदकमुदाहरणं विरोधिताया नियामकत्वस्य न युक्तम्। रामलक्ष्मणयोरित्यत्रेवात्रापि साहचर्यस्यैव नियामकत्वात्'।

**अत्रायं निर्गलितोऽर्थनिष्कर्षश्च**—दीक्षितस्योक्तं मतमयुक्तमस्ति, यतः प्रयमन्तेन प्रसिद्ध-वैररूपविरोधितायाः यत्—'रामरावणौ' इत्युदाहरणं प्रदर्शितं तन्न युक्तम् अत्र कारणमस्ति—'रामलक्ष्मणौ' इत्यत्र यथा साहचर्यनियामको भवति तथैव तत्रापि साहचर्यनियामको भविष्यति। इत्यलमतिविस्तरेणेति दिक्।

( ४१ ) **प्रश्नः**—अर्थप्रकरणलिङ्गेषु कयोश्चिद् द्वयोः स्वरूपमुपवर्णयत। ( सं० सं० विश्व० १९८७ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने संलक्ष्यक्रमध्वनिनिरूपणप्रसङ्गात् सन्दर्भितोऽस्ति। तत्र प्राचीनोक्तनानार्थशक्तिनियामकान् संयोगादीन् निरूपयितुमुपक्रमो वर्तते। ते संयोगादयश्च यथा—

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥'

अर्थात्—संयोगादयः पञ्चदशसङ्ख्यका अर्थनियामकाः भवन्ति। तेषु प्रश्नोपक्रमवशात् पञ्चमस्यार्थस्य षष्ठस्य च प्रकरणस्य स्वरूपमिहोपस्थाप्यते, तथा च प्रथममर्थस्यैव यथा—

'अर्थः प्रयोजनं चतुर्थ्याद्यभिधेयम्।'

अत्रायम्भावः—चतुर्थीविभक्त्यादि प्रतिपाद्यं प्रयोजनमर्थ।दार्थ इति कथ्यते।

अत्रोदाहरणं यथा—'स्थाणुं भज भवच्छिदे' इत्यादौ भवच्छेदनादि स्थाणुपदस्य भवे।

अर्थात्—'संसारान्मुक्तिप्राप्त्यर्थं स्थाणोः ( शङ्करस्य ) भजनं कुरु' अस्मिन् वाक्ये स्थाणुपदस्य शिवः शुष्कतरुश्च द्वावप्यर्थौ भवतः। परञ्च वक्तुः अभि-

लषितस्य 'भवच्छेद'रूपप्रयोजनस्य सिद्धिः शिवादेव सम्भवः, न तु शुष्कतरोः सकाशात्। अतः 'भवच्छेद'प्रयोजनसिद्ध्यर्थं स्थाणुपदस्याभिधा शिवरूपेऽर्थे नियन्त्रिता भवति। नन्वत्र शङ्कते यत्—

'नन्वर्थस्य लिङ्गात् को भेदः ? न च लिङ्गमनन्यसाधारणस्तद्धर्मः अर्थस्तु तद्भजनादेः कार्यम्, न तु तद्गतो धर्म इति स्फुट एव भेद, इति वाच्यम्, भवच्छेदजनकभजनकर्मत्वस्य काष्ठावृत्तिभवधर्मत्वादिति चेत् ?

अत्रायं सारांशः शङ्कायाः—लिङ्गरूपनियामकात् अस्मिन् 'अर्थ'रूप-नियामके को भेदः ? शिवाद् भिन्ने कस्मिन् अपि जने यः न तिष्ठति, एतादृशं धर्मविशेषं 'शिवस्य लिङ्गम्' इति कथयितुं शक्नुवन्ति। अयञ्च भवच्छेदरूपोऽर्थ-स्तु शिवस्य भजनफलमस्ति। न तु शिवे विद्यमानो धर्मः, अयञ्च भेदो मान-नीयो नास्ति। यतः भवच्छेदो नाम भवतु शिवभजनस्य फलम्, परञ्च तत्फलं भजनक्रियायाः कर्मत्वम्। यल्लिङ्गं शुष्कतरौ न तिष्ठति, किञ्च शिवस्य लिङ्ग-मवश्यमेवास्ति।

अत्रायमभिप्रायः—भवच्छेद-साधकभजनक्रियाकर्मत्वं यदा शिवमात्रे स्थायी धर्मोऽस्ति, काष्ठादौ न, तदा तं धर्मं शिवस्य लिङ्गं स्वीकर्त्तुं क्षमः। यदा च तं लिङ्गं स्वीकरोति, तदा तेनैव प्रकृतवाक्ये स्थाणुपदस्याभिधा नियन्त्रिता भवि-ष्यति। तदा पुनः 'अर्थम्' पृथक् नियामकरूपेण स्वीकारस्य का आवश्यकता वर्तते ?

उपर्युक्तायाः शङ्कायाः समाधानाय उत्तरयति—

'अत्राहुः ( वैयाकरणाः )—उक्तस्य विशिष्टधर्मस्य शाब्दबोधोत्तरभावि-मानसबोधविषयत्वेन प्रकृतशाब्दबोधाविषयत्वाल्लिङ्गतो वैलक्षण्योपपत्तिरिति'।

अपरञ्च—प्राचीनाः विद्वांसः स्वाभिमतं लिङ्गार्थयोर्वैलक्षण्यं प्रदर्शयन्ति यथा—'लिङ्गं त्वेकपदार्थः कोपादिः, अनन्वित एव यः पदार्थान्तरेण प्रकृतशक्य-धर्मतां शक्यान्तरव्यावृत्ततां च भजते। उक्तधर्मस्तु न तथेत्यपि केचित्।

**प्रकरणम्**—प्रकरणं नाम—अर्थनियामकानां मध्ये षष्ठस्थानीयमस्ति। तल्लक्षणञ्च यथा—'प्रकरणं वक्तृश्रोतृबुद्धिस्थता। अयम्भावः—वक्तृ-श्रोत्रोश्च द्वयोर्बुद्धौ कस्यापि वस्तुनः स्थितिः प्रकरणमिति कथ्यते। प्रकरणस्यापरं नाम 'प्रस्तावः'। उदाहरणञ्च यथा—राजानं सम्बोध्य केनचिद् भृत्येनोक्ते 'सर्वं जानाति देवः' इति वाक्ये देवपदस्य युष्मदर्थे।

अत्रायमाशयः—कोऽपि सेवकः यदा राजानं सम्बोध्य कथयति 'सर्वं जानाति देवः' एतद् वाक्यं कथयति, तदा तस्मिन् वाक्ये 'देव'पदस्य देवतामेवांश्चेत्यादि विविधार्थेऽपि 'भवान्' इत्यर्थे एवाभिधायाः नियमनं भवति, कारणमत्र तत्र 'भवान्' इत्यस्यैव प्रकरणमस्ति न तु देवस्येति।

( ४२ ) **प्रश्नः**—'लिङ्गं नानार्थपदशक्यान्तरावृत्तिरेकशक्यगतः साक्षात् शब्दवेद्यो धर्मः' व्याख्यायतामयं भागः। ( सं० सं० विश्व० १९८८ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने संलक्ष्यक्रमध्वनिनिरूपणप्रकरणात् सन्दर्भितोऽस्ति। तत्र प्राचीनोक्तनानार्थशक्तिनियामकेषु संयोगादि पञ्चदशभेदेषु सप्तमो भेदः लिङ्गमिति। अस्यैव लिङ्गस्य विषये प्रश्नोऽयमुपस्थापितः। तस्यैव स्वरूपं यथा—

'लिङ्गं नानार्थपदशक्यान्तरावृत्तिरेकशक्यगतः साक्षाच्छब्दवेद्यो धर्मः'।

अत्र व्याख्यानं यथा—तद्धर्मविशेषं लिङ्गमिति कथयन्ति विज्ञाः यन्नानार्थकपदाभिप्रेतेऽर्थे तिष्ठति, अनभिप्रेतकार्येषु च न तिष्ठति। एवञ्च यः धर्मविशेषः साक्षात् शब्देनैव बोधितो भवेत्, अर्थात् पूर्वोक्तस्य भजनकर्मत्वस्येव मनसादिभिर्ज्ञातो न भवेत्।

अस्योदाहरणञ्च यथा—'कुपितो मकरध्वजः' इत्यत्र कोपो मकरध्वजपदस्य।

**अत्रायम्भावः**—यद्यपि कोशेषु 'मकरध्वज'पदस्य शक्तिः कामदेवसमुद्राद्यनेकार्थेषु भवति तथापि 'कुपितो मकरध्वजः' अस्मिन् वाक्ये कोपरूपलिङ्गात् मकरध्वजपदस्य शक्तिः कामदेवरूपेऽर्थे नियन्त्रिता भवति, यतः मकरध्वजपदस्य समुद्राद्यचेतनार्थेषु अस्थिरत्वात् कामदेवे स्थितिः, 'कुपित' इत्येकपदेन च सुज्ञातः 'कोपः' कामदेवस्य लिङ्गं ( चिह्नविशेषः ) भवति। अतः उक्तवाक्ये मकरध्वजपदेन कामदेवस्यैव बोधो भवति, नान्यस्य। इत्यलमतिविस्तरेणेति।

( ४३ ) **प्रश्नः**—शब्दशक्तिमूलालङ्कारध्वनेरुदाहरणे 'करतलनिर्गलत्' इत्यादि पद्ये कोऽलङ्कारध्वनिरिति ग्रन्थदिशा निर्दिशत।

( सं० सं० विश्व० १९७६ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने संलक्ष्यक्रमध्वनिनिरूपणप्रकरणात् सन्दर्भितोऽस्ति। तत्र संलक्ष्यक्रमध्वन्युदाहरणोपस्थापनविधिमभिलक्ष्यादौ शब्दशक्तिमूलालङ्कारध्वनेरुदाहरणं यथा—

'करतलनिर्गलदविरलदानजलोल्लासितावनीवलयः ।
धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥'

प्रस्तुतमिदं पद्यं दशविधेषु संलक्ष्यक्रमध्वनिषु शब्दशक्तिमूलकालङ्कारध्वनेरुदाहरणमस्ति । अस्मिन् पद्ये कश्चित् कविः कस्यापि राज्ञः स्तुतिं करोत्येतद् वर्णनमस्ति ।

अत्रायम्भावः—( हे राजन् ! तव ) पाणिपल्लवात् सततं स्यन्दमानेन दानसङ्कल्पजलेनाखिलं भूमण्डलमानन्ददायकः, धनदानपरायणेषु च प्रथमं पूजितः, 'अयं चक्रवर्ती राजा सर्वोत्कृष्टोऽस्ति' इत्येष वाच्यार्थः । अपरश्चात्र—व्यङ्ग्यार्थोऽपि तिष्ठति, यथा—शुण्डादण्डादनवरतनिष्यन्दमानमदजलेनाखण्डं भूमण्डलमानन्ददायको धनद-कुबेरस्याग्रतः प्रशंसितस्वरूपो विश्वरूपोऽयं सार्वभौमो दिग्गजः सर्वोत्कृष्टोऽस्ति । नागेशपण्डितास्तु व्यङ्ग्यार्थपक्षे सार्वभौमपदस्यार्थः 'इन्द्र' इति कृतः । एतदपि ध्यातव्यम् । अत्रोपपादनं यथा ग्रन्थकारमुखेन—

'अत्र राजप्रकरणे कर-दान-धनद-सार्वभौमशब्दानां शक्तौ सङ्कोचितायामपि तन्मूलकेन ध्वननेन प्रतीयमानस्यार्थान्तरस्याप्रस्तुतस्याभिधानं मा भूदिति प्रकृताप्रकृतयोरुपमानोपमेयभावः प्रधानवाक्यार्थतया कथ्यत इत्युपमालङ्कारध्वनिः' ।

अत्रायं निर्गलितोऽर्थः—उदाहरणात्मकमुक्तं पद्यं राज्ञः प्रकरणे कथितमस्ति । अतस्तस्मिन् प्रोक्तानां कर-दान-धनद-सार्वभौमपदानामभिधा क्रमशः हस्त-वितरण-दातृ-चक्रवर्त्तिराजरूपेष्वर्थेषु प्रकरणद्वारा नियन्त्रिता भवति । येन राजपक्षीयोऽर्थ एव वाच्यो भवति । परञ्च वाच्यार्थबोधानन्तरं शब्दशक्तिमूलिकया व्यञ्जनया पूर्वोक्तस्य दिग्गजस्याथवेन्द्रपक्षस्यार्थोऽपि ज्ञातो भवति । नन्वत्र शङ्कते यत्—अप्रासङ्गिकस्य गजपक्षीयार्थस्य प्रतीतिं ( स्यान्नाम व्यञ्जनया ) कथं स्वीकुर्यात् ?

**अत्रेदं समाधानम्**—चक्रवर्ती नृपतिः, दिग्गजोऽथवा इन्द्र-सदृशः; इत्थं प्राकरणिकाप्राकरणिकेष्वर्थेषु उपमानोपमेयभावस्य प्रतीत्यै । अतः कविना सम्यग् ज्ञात्वैव द्व्यर्थकयोः पदयोः प्रयोगः कृतः । अनेन प्रकारेणैतत् सिद्धं भवति यदुक्तस्योपमालङ्कारस्य प्रतीतिकरणमेव कवेर्मुख्यमुद्देश्यम् । अतश्चमत्कारोऽपि तत्प्रतीतावेवास्ति । एभिः कारणैः पद्यमिदमुपमालङ्कारध्वनेरुदाहरणं भवतीति दिक् ।

( ४४ ) प्रश्नः--शब्दशक्तिमूलमलङ्कारध्वनिमुदाहृत्य समासोक्तिस्तद्वैलक्षण्यं विचार्यताम् ( सं० सं० विश्व० १९८८ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने चर्चितस्य संलक्ष्यक्रमध्वनिनिरूपणप्रसङ्गात् सन्दर्भितोऽस्ति। तत्र संलक्ष्यक्रमध्वन्युदाहरणप्रदर्शनप्रसङ्गे प्रथमं शब्दशक्तिमूलालङ्कारध्वनिनिरूपणप्रसङ्गे तदुदाहरणं यथा—

'करतलनिर्गलदविरलदानजलोल्लासितावनीवलयः।
धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥'

प्रस्तुतमिदमुदाहरणं पूर्वोक्तासु दशविधासु संलक्ष्यक्रमध्वनिषु शब्दशक्तिमूलकालङ्कारध्वनेरस्ति। अस्मिन् पद्ये कश्चित् कविः कस्यापि राज्ञः स्तुतिं करोति। अस्य पद्यस्यार्थः प्रकारद्वयेन भवति—वाच्यार्थेन व्यङ्ग्यार्थेन च।

अत्रोपपादनं यथा—

'अत्र राजप्रकरणे कर-दान-धनद-सार्वभौमशब्दानां शक्तौ सङ्कोचितायामपि तन्मूलकेन ध्वननेन प्रतीयमानस्यार्थान्तरस्याप्रस्तुतस्याभिधानं मा भूदिति प्रकृता-प्रकृतयोरुपमानोपमेयभावः, प्रधानवाक्यार्थतया कथ्यत इत्युपमालङ्कारध्वनिः।

अत्रायम्भावः—उक्तपद्यं राज्ञः प्रकरणे कथितमस्ति, अतस्तस्मिन् तदुक्त—कर-दान धनद-सार्वभौमपदानाञ्चाभिधा क्रमशः हस्त-वितरण-दातृ-चक्रवर्ती-राजा-रूपेष्वर्थेषु च प्रकरणद्वारा नियन्त्रिता भवति। येन राजपक्षीयोऽर्थ एव वाच्यो भवति। परञ्च वाच्यार्थबोधानन्तरं शब्दशक्तिमूलकव्यञ्जनया पूर्वोक्तस्य दिग्गजस्याथवा—इन्द्रपक्षस्यार्थोऽपि ज्ञातो भवति, अत्रेयं विचिकित्सा समायाति यदप्रासङ्गिकस्य गजपक्षीयार्थस्य प्रतीतिः ( व्यञ्जनयैव ) कथं स्वीकर्त्तुं योग्या ? अस्य समाधानमिदमस्ति यत्—चक्रवर्ती-राजा-दिग्गज-इन्द्रादिवत् प्राकरणिकाप्राकरणिकेष्वर्थेषु उपमानोपमेयभावस्य प्रतीत्यै। अत एव कविना सुदृढं परिज्ञायार्थद्वयपदानां प्रयोगो विहितः। अनेन प्रकारेणैतत् सिद्धं भवति यत्—उक्तोपमालङ्कारस्य प्रतीतिरेव कवेः मुख्यमुद्देश्यम्।

अत एव चमत्कारोऽपि तत्प्रतीतावेव विद्यते। एभिः कारणैरिदं पद्यमुपमालङ्कारध्वनेरुदाहरणमस्ति।

साम्प्रतमुक्तस्थले ध्वनेर्विषये मतान्तरस्यावतारणां कुर्वन्ति, तद्यथा—

'अथ श्लिष्टविशेषणायां समासोक्तौ व्यङ्ग्यस्याप्रकृतव्यवहारस्य प्रकृतधर्मिण्यारोपमाणस्य प्रकृतोपस्कारकतया यथा गुणीभूतव्यङ्ग्यत्वमेवमिहाऽप्युचितम् ।

अत्रायं निष्कर्षः—'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' अर्थात् परगतामिदम्—'रक्तश्चन्द्रः पूर्वदिशायाः मुखं चुम्बति' अस्मिन् काव्यांशवाक्ये रक्तं मुखं चुम्बति चेमानि विशेषणवाचकानि पदानि श्लिष्टानि सन्ति, अतस्तेभ्योऽनुरागयुक्तं रक्तकान्तिमत्वं मुखं तथा अग्रभागः, चुम्बनं स्पर्शश्चेति द्वौ द्वावर्थौ वाच्यौ भवतः । तच्छ्लेषाधारे एव कामिनीमुखचुम्बनरूपोऽप्रस्तुतो व्यवहारः व्यङ्ग्यो भवति । स च व्यङ्ग्योऽर्थोऽसम्बद्धो न स्यात् प्रस्तुते चन्द्रे दिग्व्यवहारे च नायक-नायिकयोः व्यवहारः आरोपितो भवति, येनारोपितनायकव्यवहारयुतश्चन्द्रः आरोपितनायिकाव्यवहारयुतां पूर्वदिङ्मुखं चुम्बति—एतादृशो वाक्यार्थः सम्भवति । अतः उक्तपद्यांशः यथालक्षणं समासोक्त्यलङ्कारस्योदाहरणं कथ्यते ।

प्रकृतेऽधुना कथनमस्ति यत्—यथोक्तस्थले कामिनीमुखचुम्बनादिव्यवहारः व्यङ्ग्यो भूत्वापि वाच्यार्थस्य पोषकत्वात् अल्पचमत्कारत्वाच्च गौणीभावाद् ध्वनिकाव्यव्यवहारस्य हेतुर्न, अपितु गुणीभूतव्यङ्ग्यनामकमध्यमव्यवहारस्यैव हेतुर्भवति । तेनैव प्रकारेण करतलेत्यादि प्रकृतपद्येऽपि दिग्गजवृत्तान्तोऽथवा तन्मूलकोपमालङ्कारः व्यङ्ग्यो भूत्वापि, वाच्यस्य राजवृत्तान्तस्य पोषकत्वाद् गौण एव । अतस्तं व्यङ्ग्यमादायोक्तं पद्यं ध्वनिकाव्यस्योदाहरणं भविष्यति । इत्यलं पल्लवितेनेति दिक् ।

**( ४५ ) प्रश्नः—शनिरशनिश्च तमुच्चैः ! इत्याद्युदाहरणे को दोषः ? इति ग्रन्थदृशा निर्णीयताम् । ( सं० सं० विश्व० १९८८ ई० )**

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने शब्दशक्तिमूलध्वनिनिरूपणप्रसङ्गात् सन्दर्भितोऽस्ति । एतल्लक्षणोदाहरण-प्रतिपादनानन्तरं काव्यप्रकाशोक्तस्य शब्दशक्तिमूलवस्तुध्वनेः उदाहरणे को दोष इति विचारावसरे ग्रन्थकारस्य परीक्षणं यथा काव्यप्रकाशे तु—'शनिरशनिश्च तमुच्चैः' इत्यादिकमुदाहृत्य 'अत्र विरुद्धौ द्वावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति ध्वन्यत इत्युक्तम् । तच्च द्वौ शन्यशनी उदारानुदारौ चैकं कार्यं हननं भानं च' इति व्याख्यातृभिर्व्याख्यातम् । तत्र शन्यशन्योर्हननक्रियाकर्तृत्वान्वयेऽप्युदारानुदारयोर्भानकर्तृतत्पदार्थविशेषणयोस्तत्प्रकारविशेषणयोर्वा साक्षाद्भानकर्तृत्वान्वयाभावात् कथमेककार्यकारित्वं सङ्गतं स्यात् ?

अत्रायं विमर्शः--उपर्युक्तस्योदाहरणस्य पूर्णं पद्यमस्ति—शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र ! यस्मै त्वम् । यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च । अस्य पद्यस्यार्थोऽस्ति—हे नरेन्द्र ! यस्मै त्वं कुप्यसि तं शनिर्ग्रहविशेषः, अशनिः शनिविरोधी वस्तुतो वज्रम्, उच्चैरतिशयेन निहन्ति । विरोधिनौ द्वावपि तवानुवृत्त्यै एकं कार्यं कुरुतः । अन्येऽपि व्याख्यातारः द्वावपि शनिरशनी उदारानुदारौ चेति कथयन्ति ।

अत्र पण्डितराजाः आहुः—उक्ता व्याख्या ग्रन्थसंस्तुता न प्रतीयते । कारणञ्चात्र—तया योऽयमभिप्रायो निःसरति, उदारानुदारौ शोभाधायकौ कार्यमेकं कुरुतः एतद्वस्तु अप्यत्र व्यङ्ग्यं भवति, एतदनुचितमस्ति । यतो हि शन्यशन्योश्च हननक्रियायाः कर्तृत्वस्य सम्बन्धोऽस्ति । अतस्तयोः 'हनन'रूपमेककार्यं यद्यपि भवितुमर्हति, तथाप्यन्यस्याः क्रियायाः 'सुशोभित' इत्यस्याः कर्ता स एव, न तु उदारानुदारौ, तौ तु तत्पदस्यार्थस्याथवा तदर्थस्य विशेषणस्य विशेषणम् । अतस्तयोः सुशोभितरूपक्रियया सह साक्षात् सम्बन्धाभावात् एककार्यसम्पादको न भविष्यति, अर्थात् उदारानुदारौ यदा सुशोभितक्रियायाः कर्तारावेव न स्तः, किञ्च कर्तुः विशेषणम् उत तद्विशेषणस्य विशेषणौ स्तः, तदा शोभितमिति तत्कार्यं न भविष्यति । इति सन्दिग्धावस्थायां काव्यप्रकाशकर्त्तुः स्फुटमाशयं स्पष्टीकरोति, तद्यथा---'अतो विरुद्धौ द्वावि'त्यादि प्रथमार्धविषयम् । द्वितीयार्धे तु विरोधाभास एव ।

अत्रायमाशयः—यत्तु प्रकाशकृतोक्तपद्ये विरोधिनौ द्वावपि पदार्थौ भवदनुसरणाय एकं कार्यं कुरुतः, इति व्यङ्ग्यस्य विधानं कृतं तत्तु पद्यस्य पूर्वार्धे एवोत्तरार्धस्य विषयेन, अतो विरोधाभासस्याभिव्यक्तिस्तत्र भविष्यति । एतदपि तदैव भविष्यति यदा 'च' पदे समुच्चयार्थके स्वीकृते सति । यदि 'च' इति पदं अपेस्तुल्यं स्वीकृत्य विरोधो वाच्यतां भजेत् तदा विरोधाभासः व्यङ्ग्यो नैव । सारभूतमिदं तथ्यमायाति यदुक्तव्याख्याग्रन्थोऽसङ्गत एव ।

साम्प्रतमुक्तव्याख्याग्रन्थस्यापि सङ्गतिसिद्ध्यर्थं प्राचीनैरकथितः समन्वयः साम्प्रतं प्रकाश्यते---कर्तृभेदेनान्वयमात्रेण कुरुत इत्यस्योपपत्तिश्चेत् ? अस्तु द्वितीयार्धेऽपि विरुद्धौ द्वावित्यादि वस्तु व्यङ्ग्यम् । परन्त्वर्धद्वयेऽपि विरोधाभासालङ्कारशबलितमेव । शत्रुविरुद्धस्य शत्रुत्वासम्भवादेकस्य शन्यशनिकर्तृकहननकर्मत्वायोगेनाद्यार्धे उदारत्वानुदारत्वयोरेकाधिकरणवृत्तित्वायोगाद् द्वितीयार्धे च विरोधस्य स्फुटत्वात् ।

अनेन प्रकारेण 'शनिरशनिश्चे'ति पद्ये ग्रन्थदिशा अन्येषां मतेन च दोषः समापतति।

( ४६ ) **प्रश्नः**—'तदप्राप्तिमहादुःखविलीनाशेषपातका' इत्यादावतिशयोक्तेरर्थापत्तिविषयत्वं गुणीभूतव्यङ्ग्यत्वं जगन्नाथः कथमुपपादयतीति निरूपयत। ( सं० सं० विश्व० १९७५ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने शब्दशक्तिमूलालङ्कारध्वनिनिरूपणप्रकरणात् सम्बन्धितोऽस्ति। अत्र स्वतःसम्भविना वस्तुनाऽलङ्कारध्वन्युदाहरणप्रसङ्गे—'मृद्वीका रसिता सिते'-त्यादि चर्चिताऽस्ति। अत्रैवैका शङ्का जागर्ति यत्—'अथ विषयस्यात्र नानाजन्मगतवृत्तान्तरूपतया तज्ज्ञं प्रत्येव प्रष्टुमौचित्येनानभिज्ञं स्वजीवं प्रति प्रष्टुमयोग्यत्वात् प्रश्नान्यथानुपपत्त्या आक्षिप्ता, वाच्यसिद्ध्यङ्गत्वेन गुणीभूतव्यङ्ग्यरूपा वा प्रागुक्तातिशयोक्तिरिह कथं ध्वनिव्यपदेशहेतुः स्यात्? इत्येषा प्रस्तुता शङ्का प्राचीनैरुक्ते स्वतःसम्भविना वस्तुनाऽलङ्कारध्वनेरुदाहरणेऽपीयं समानैवेति प्रकटयति; तद्यथा—इत्थमेव च 'तदप्राप्तिमहादुःख' इत्यत्रापि अतिशयोक्तेरर्थापत्तिविषयत्वं गुणीभूतव्यङ्ग्यत्वं वा युक्तम्। अनेकजन्मोपभोग्यदुःखसुखराशिभ्यां तदप्राप्तिमहादुःख-तच्चिन्ताविपुलाह्लादयोरनिगरणेऽशेषपापपुण्यपुञ्जनाशकतया अनुपपत्तेः। तद्दुःखसुखानां स्व-स्वफलोपहितपाप-पुण्यनाशकताया एवान्यत्र क्लृप्तत्वात्। निगरणे तु तयोस्तन्नाशकताबुद्ध्युपपत्तिः। प्रथमं प्रस्तुतस्यास्योदाहरणस्य पूर्णत्वं यथा विष्णुपुराणे पञ्चमांशे त्रयोदशाध्याये—

'तदप्राप्तिमहादुःखविलीनाशेषपातका।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका।

अत्रायमाशयः—भगवतः श्रीकृष्णस्य रासलीलायां सर्वाः गोपबालाः सम्मिलिताः भवन्तिस्म, परञ्च काऽप्येका गोपाङ्गना पत्यादिसंरक्षकैः निवारिता सति तस्यां सम्मिलिता नाभूत्, तेन कारणेन सा नितान्तं दुःखिता बभूव। परञ्च तेनैव दुःखेन तस्याः समस्तानि पापानि नष्टानि, घनश्यामस्य श्रीकृष्णस्य निरन्तरचिन्तनेन तामसीमानन्दोऽप्यभूत्। अवसाने च सा मुक्ताऽप्यभूत्।

अत्र विमर्शः—भगवतः अप्राप्त्योत्पन्नेन महादुःखेन सकलपापानां नाशः, अपरञ्च भगवतः स्मरणेनोत्पन्नानन्देन पुण्यसमूहनाशस्य विषयः यः वाच्यरूपे वर्णितोऽस्ति, स च विषयस्तावत् सङ्गतो न भविष्यति, यावत् तयोः दुःखानन्दयोः क्रमशोऽनेकजन्मसु भुक्तैः दुःखैः सुखैश्च तादात्म्यं न स्यात्, यतो हि शास्त्रेषु यानि दुःखानि येषां पापानां फलानि सन्ति, यानि सुखानि च येषां पुण्यानां फलानि सन्ति, तान्येव तत्पापानां पुण्यानाञ्च नाशकानि सन्ति, अपि च एतानि कृष्णवियोगदुःखानि कृष्णस्मरणसुखानि च तेषां लौकिकपाप-पुण्यानां फलानि सन्त्येव नहि। अतस्तत्पापपुण्यानां फलरूपैः सुखदुःखैः एतयोः वियोग-दुःख-स्मरणसुखयोश्च तादात्म्यं यदतिशयोक्तिरूपमस्ति, एतन्मन्तव्यमिति। अस्यां परिस्थितावत्रापि अतिशयोक्तिः, पूर्वोक्तयुक्त्याऽर्थापत्तिर्वेद्येति व्यङ्ग्यैव न भविष्यति, किं वा वाच्यसिद्धेरङ्गं भूत्वा मध्यमकाव्यव्यवहारहेतुर्भविष्यति, न तु ध्वनिकाव्यतायाः नियामकः।

अपरश्चाशङ्का तत्समाधानं च यथा—'न च वस्तुमात्राभिव्यक्तस्यालङ्कारस्य न गुणीभूतव्यङ्ग्यत्वम्—'व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा। ध्रुवं ध्वन्यङ्गात्म तासां काव्यवृत्तेस्तदाश्रयात्॥' इति सिद्धान्तादिति वाच्यम्। बाधे दृढे सिद्धान्तमात्रेणात्र ध्वनित्वस्य स्थापयितुमशक्यत्वादिति चेत्, सत्यम्; पर्यवसाने समाधानसूत्रम्, यथा—'यादृशव्यङ्ग्यप्रतिपत्तिं विना यत्र वाच्यस्य सर्वथाप्यनुपपत्तिस्तत्र तद्वाच्यसिद्ध्यम्। यत्र प्रकारान्तरेणापि तस्योपपत्तिशक्याकर्तुं न तत्र तथा। अत्रेदं तात्पर्यम्—उक्तपद्येष्वतिशयोक्तिर्यदि वाच्यसिद्धेरङ्गं स्यात् तदा न सा गुणीभूता, वस्तुतः वाच्यसिद्धेरङ्गं न, कारणञ्चात्र—तद्व्यङ्ग्यं तत्र वाच्यसिद्धेरङ्गं भवति, यज्ज्ञानेन विना यत्र वाच्यस्य सिद्धिः सर्वथा न भवति, व्यङ्ग्यज्ञानातिरिक्तः कोऽप्युपायः यत्र वाच्यार्थस्य साधकः न तिष्ठति तत्रैव व्यङ्ग्यवाच्यसिद्धेरङ्गं भवति, यत्र च वाच्यः केनाप्यन्येन प्रकारेणापि सिद्धो भवेत् न तत्र व्यङ्ग्यवाच्यसिद्धेरङ्गं भवति नैव।

( ४७ ) **प्रश्नः**—'बधान द्रागेव द्रढिमरमणीयं परिकरम्' इत्यत्र कतमो ध्वनेर्भेद इत्युपपादयत। ( सं० सं० विश्व० १९८७ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने लक्षणामूलध्वनिनिरूपणप्रसङ्गात् सन्दर्भितोऽस्ति। उपर्युक्तमुदाहरणात्मकं पद्यमजहत्स्वार्थामूलध्वनेरस्ति। तद्यथा अपरामूलो यथा—

'बधान द्रागेव द्रढिमरमणीयं परिकरं
किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः ।
न कुर्यास्त्वं हेलामितरजनसाधारणधिया
जगन्नाथस्यायं सुरधुनि समुद्धारसमयः ॥'

प्रस्तुतमिदं पद्यं ग्रन्थकार-पण्डितराज-जगन्नाथकृतस्य 'गङ्गालहरी' नामकस्य स्तोत्रग्रन्थस्यास्ति । पण्डितराजाः गङ्गायाः स्तुतिं कुर्वन्ति—'सुरधुनि' ( सुरनदि ) इत्यादिभिः ।

अत्रोपपादनं यथा—प्रस्तुते पद्ये 'जगन्नाथ'पदस्य वाच्यार्थः यः एको व्यक्तिविशेषो भवति । तस्य बोधो यदि केवलं व्यक्तिविशेषस्य रूपे एव 'जगन्नाथं'पदेन स्यात् तदा तस्योद्धारस्य कापि आवश्यकता सिद्धा न भविष्यति, अर्थात् यद्येकव्यक्तेः सम्बलेन कस्याप्युद्धारः आवश्यकः स्यात्तदा जगन्नाथस्यैव कथं न ? कस्याप्यन्यस्यापि विज्ञेयम् । अतः स्वीकर्त्तव्यो यत्—अत्र जगन्नाथपदस्य वाच्यार्थः शुद्धरूपे बाधितोऽस्ति, येन विविधपापकारिणि जगन्नाथात्मके व्यक्तिविशेषरूपेऽर्थे जगन्नाथपदस्य लक्षणा भवति, सा च लक्षणा 'अजहत्स्वार्था' कथ्यते, यतो हि—उक्तलक्ष्यार्थे जगन्नाथरूपमुख्यार्थस्य त्यागो नाभवत् । एतादृशीं लक्षणां प्राचीनाः विद्वांसः 'उपादानलक्षणे'ति कथयन्ति । पापानामन्येन केनापि पदेन प्रतिपादनाभावोऽर्थात् जगन्नाथस्य पापाः एवम्भूताः सन्ति येषां प्रतिपादनं शब्दान्तरेण कथनमसम्भवः । अस्यार्थस्य बोधकरणमुक्तायाः लक्षणायाः प्रयोजनमस्ति, प्रयोजनस्यास्य च बोधो भवति व्यञ्जनया, अतः पद्यमेतत् अजहत्स्वार्थालक्षणामूलध्वनेरुदाहरणं भवति ।

**( ४८ ) प्रश्नः—जगन्नाथाभिमतं लक्षणालक्षणं परिष्कृत्य लक्षणविभागान् सोदाहरणनिर्देशं प्रदर्शयत । ( सं० सं० विश्व० १९७५ )**

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने शक्तिमूलनिरूपणप्रकरणात् सन्दर्भितोऽस्ति । तत्र लक्षणामूलध्वनिनिरूपणानन्तरं लक्षणानिरूपणस्य सङ्गतिमादौ दर्शयितुमाह—अथ केयं लक्षणा, यन्मूलश्चरमं निरूपितो ध्वनिः । एतदवस्थायामुच्यते तल्लक्षणं यथा—'शक्यसम्बन्धो लक्षणा' ।

अत्रायमाशयः—यस्य कस्यापि पदस्य शक्यार्थस्य येन केनापि पदार्थेन सह यः सम्बन्धः तामेव 'लक्षणे'ति कथयन्ति । स च सम्बन्धः विभिन्नस्थानेषु विभिन्नप्रकारस्य सम्भवः । यद्यप्ययं सम्बन्धः अर्थे स्थास्यति, तथापि स्वप्रति-

योगिवाचकत्वसम्बन्धेनोक्तसम्बन्धरूपा लक्षणा पदनिष्ठवृत्तिर्ज्ञेया। लक्षणायाः लक्षणमिदं तार्किकविचारोपेतमस्ति। मीमांसकास्तु शक्यार्थेनाशक्यार्थस्योपस्थितिर्लक्षणेति स्वीकुर्वन्ति। वैयाकरणाः लक्षणामतिरिक्तां वृत्तिं स्वीकुर्वन्त्येव नहि। ते शक्त्याः एव भेदद्वयं कुर्वन्ति, एकः प्रधानोऽपरश्च गौणः, तस्यां गौणशक्त्यां च लक्षणाया व्यवहारो भवति, ननु किमस्ति लक्षणायाः कारणमिति जिज्ञासायां सुविचारितो विलक्षणो विचारः उपस्थाप्यते; तद्यथा—'तस्याश्चार्थोपस्थापकत्वे मुख्यार्थतावच्छेदके तात्पर्यविषयान्वयितावच्छेदकताया अभावो न तन्त्रम्। शक्यतावच्छेदकरूपेण लक्ष्यमाणस्य स्वीकारात्। किन्तु तात्पर्यविषयान्वये मुख्यार्थतावच्छेदकरूपेण मुख्यार्थप्रतियोगिकताया अभावो न रूढिप्रयोजनयोरन्यतरच्च तन्त्रम्। मुख्यार्थान्वयानुपपत्ते तन्त्रत्वे तु 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र लक्षणोत्थानं न स्यात्।

अत्रायं सङ्क्षेपतमो भावः—लक्षणायाः कारणसम्बन्धे मतद्वयम्। अन्वयस्यानुपपत्तिः लक्षणायाः प्रथमं कारणम्। तत्पदस्य लक्षणा कस्याप्यर्थे भवति, यस्य शक्यार्थस्यान्वयः वाक्यघटकान्यपदार्थेन सह न भविष्यति। परञ्चेदं मतं सङ्गतं नास्ति—यतो हि 'काकेभ्यो दधि रक्ष्यताम्' 'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इति लक्षणायाः प्रसिद्धे उदाहरणे स्तः। किन्तु साम्प्रतं तत्र लक्षणा न भविष्यति, अन्वयानुपपत्तेस्तत्राभावत्वात्। द्वितीयं मतञ्च तात्पर्यानुपपत्तिः लक्षणायाः कारणत्वात् तत् समीचीनं वर्त्तते। अत्रापि विप्रतिपत्तिः वर्त्तते, विस्तरभयादत्राचर्चिता।

सम्प्रति शक्यसम्बन्धरूपाया लक्षणायाः स्वरूपं स्थलभेदाद् भिन्नं-भिन्नं भवति, तादृशस्थलानामुल्लेखो यथा—'गङ्गायां घोषः' इत्यत्र सामीप्यम्, मुखचन्द्रः इत्यादौ सादृश्यम्, व्यतिरेकलक्षणायां विरोधः, 'आयुर्घृतम्' इत्यादौ कारणत्वादयश्च सम्बन्धा यथायोगं लक्षणाशरीराणि'।

एतादृशीयं लक्षणा तावद् द्विविधा—निरूढा प्रयोजनवती च। तत्रापि द्वितीया द्विविधा–गौणी शुद्धा च। तत्राद्या सारोपा साध्यवसाना चेति द्विविधा। अन्त्या च चतुर्विधा—जहत्स्वार्था, अजहत्स्वार्था, सारोपा, साध्यवसाना चेति प्रयोजनवती इत्येवं षड्विधा तात्कालिकप्रभावेण सम्पद्यते।

तत्र निरूढालक्षणाया अनुकूल-प्रतिकूलानुलोमप्रतिलोमलावण्यादय उदाहरणम् नीलादयश्च। इत्यलं पल्लवितेनेति दिक्।

(४९) **प्रश्नः—मुखचन्द्र इत्यत्र प्राचीनाभिमतं लक्षणाप्रकारं तत्प्रयोजनञ्च लिखत। ( सं० सं० विश्व० १९८७ )**

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने लक्षणा-निरूपणप्रकरणात् सन्दर्भितोऽस्ति। तत्र लक्षणायाः पूर्णं विवरणमुपलभ्यते। प्रयोजनवत्याः लक्षणायाः षड् भेदाः पूर्वं-प्रतिपादिताः सन्ति, तेषु शुद्धा प्रयोजनवत्याः द्वयोः जहत्स्वार्था-अजहत्स्वार्थयोश्चोदाहरणानि पूर्वमेव निर्दिष्टम्। अवशिष्टाश्चत्वारो भेदाः गौणी-सारोपा, गौणी-साध्यवसाना, शुद्धा-सारोपा, शुद्धा-साध्यवसाना च भवन्ति। अपरश्च लक्षणा यदा सादृश्य-सम्बन्धरूपे प्रवृत्ता भवति तदा गौणी कथ्यते, यदा चान्यस्य कस्यापि सम्बन्ध-रूपे प्रवृत्ता भवति तदा शुद्धा। **सारोपा-साध्यवसाना च विषयविषयिणोः** विषयः, यस्मिन् आरोपः क्रियते सः, यथा मुखमिति, विषयिणः यस्यारोपः क्रियते सः = चन्द्रः, द्वयोः पृथक्पृथग् निर्देशात् क्रियमाणोऽभेदः=आरोपः कथ्यते, विषयस्य च पृथक् निर्देशमकृत्वा तेन सहाकृतस्थविषयिणोऽभेदोऽध्यवसानः कथ्यते। तयोर्द्वयोः आरोपसहिता लक्षणा सारोपा, अध्यवसानेन च भुक्ता लक्षणा साध्यवसाना कथ्यते।

तत्र गौण्योः सारोप-साध्यसानलक्षणयोरुदाहरणे दर्शयति—उदाहरणानि च 'मुखं चन्द्रः' इत्यादीनि गौण्याः सारोपायाः। 'पुरेऽस्मिन् सौधशिखरे चन्द्र-राजी विराजते' इत्यादीनि च तस्याः साध्यवसानायाः। अत्रायमाशयः—'मुखचन्द्र' इत्यादिस्थले चन्द्रपदस्य स्वसदृशे लक्षणा भवति, यतः चन्द्रपदस्य मुख्यार्थस्येन्दोः मुखेन सहाभेदान्वयो बाधितोऽस्ति। इयं लक्षणा सादृश्यसम्बन्ध-मूलकत्वाद् गौणी-विषयस्य मुखस्य विषयिणः चन्द्रस्य, द्वयोः पृथङ्निर्देशात् सारोपा कथ्यते। इयमेव लक्षणा रूपकालङ्कारस्य बीजम्। साध्यवसाना च 'पुरेऽस्मिन्' इत्यादौ चन्द्रपदस्य मुखे सादृश्यसम्बन्धरूपा लक्षणाऽस्ति, यतः कोष्ठेषु चन्द्रपङ्क्तेः स्थितिः बाधिताऽस्ति, परश्चात्र विषयमुखस्य पृथङ् निर्देशो नास्ति, 'चन्द्रराजी' पदेनैव तस्यापि बोधः, अतः इयं साध्यवसाना कथ्यते। इयं लक्षणातिशयोक्तेः बीजमस्ति।

अत्र स्थले शाब्दबोधप्रकारो यथा ग्रन्थमुखेनैव—'अत्राद्यायां विषयिप्रति-पादकैश्चन्द्रादिशब्दैर्लक्षणयोपस्थापितानां चन्द्रादिसदृशानामभेदेन संसर्गेण मुखा-दिशब्दोपस्थापितैर्मुखत्वादिभिरन्वयः।

अत्रेयं शङ्का प्रादुर्भवति—ननु सदृशरूपधर्मिलक्षणायां गौरवात् सादृश्य-रूपधर्मलक्षणैव कुतो नाङ्गीक्रियत इत्यत आह—'सादृश्यरूपधर्मलक्षणायां तु तेन सह मुखादीनामन्वयो न स्यात्, नामार्थयोरभेदातिरिक्तसंसर्गेण विशेष्य-विशेषणभावस्यानुपपत्तेः'। अयं भावः—'मुखचन्द्र' इत्यादिस्थले चन्द्र-आदि-

पदस्य लक्षणा सदृशधर्मेषु न स्वीकृत्य सादृश्यरूपे धर्ममात्रे स्वीकुर्यात्, यदि चन्द्रपदस्य लक्ष्यार्थस्य चन्द्रसादृश्यस्य मुखपदार्थेन सहान्वयो न भविष्यति ।

निष्कर्षश्चात्र—सदृशरूपे धर्मिण्येव चन्द्रादि उपमानवाचकपदानां लक्षणा स्वीकर्त्तव्येति ।

अत्र पुनरपि शङ्कते—'नन्वेवं सति बोधावैलक्षण्याच्चन्द्रसदृशं मुखमित्युपमानो मुखं चन्द्र इति रूपकस्य कथं भेदः ? न च सदृशविशेषणचन्द्रसम्बन्धासम्बन्धाभ्यामिति वाच्यम् । बोधस्य वैलक्षण्यमात्रेण पृथगलङ्कारताया असिद्धेः अन्यथा मुखं चन्द्र इवेत्यत्र चन्द्रसदृशमित्येतद्गतात् पृथगलङ्कारतापत्तिरिति चेत् ?

अस्याः शङ्कायाः समाधानार्थं प्राचीनानामभिमतं यथा प्रकारत्रयेण समाधानम्—'अत्र केचित् रूपकस्योपमातः स्वरूप-संवेदनांशमादायावैलक्षण्येऽपि लक्षणाफलीभूततादूप्यसंवेदनमादाय वैलक्षण्यं निर्बाधम्' । इत्यादि । अत्रायमाशयः-प्राचीनानां कथनमस्ति—यद्यपि मुखचन्द्रेति रूपकात् 'चन्द्रसदृशं मुखम्' इत्युपमायां स्वरूप-संवेदन-प्राथमिकबोधः भिन्नप्रकारस्य न भवेत्, अर्थात् रूपकस्थले लक्षणा-स्वीकृतौ यादृशः बोधो भवति, उपमास्थले लक्षणाया अस्वीकृतावपि तादृश एव बोधो भवति, अतस्तदंशमादाय तयोर्द्वयोः स्थानयोः कापि विलक्षणता न भवति, तथापि रूपकस्थले लक्षणा प्रयोजनमूलैव भवति । अनेन प्रकारेण प्राचीनाभिमतं लक्षणाप्रकारं तत्प्रयोजनञ्च सिद्ध्यतीति दिक् ।

( ५० ) प्रश्नः—भेदकरम्बितं सादृश्यमुपमाजीवातुभूतम्, भेदकरम्बितञ्च गौणसारोपलक्षणाया इति स्फुटभेदे कृतं फलकृतवैलक्षण्यपर्यन्तानुधावनेन पङ्क्तिरेषा व्याख्यायताम् । ( सं० सं० विश्व० १९८८ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने लक्षणानिरूपणप्रकरणात् सन्दर्भितोऽस्ति । तत्र गौणसारोपालक्षणायाः विचारावसरे नन्वेका शङ्का जागर्ति । तद्यथा ग्रन्थकारमुखेन—'नन्वेवं सति बोधा वैलक्षण्याच्चन्द्रसदृशं मुखमित्युपमानो मुखं चन्द्र इति रूपकस्य कथं भेदः ? न च सदृशविशेषणचन्द्रसम्बन्धासम्बन्धाभ्यामिति वाच्यम् । बोधस्य वैलक्षण्यमात्रेण पृथगलङ्कारताया असिद्धेः । अन्यथा मुखं चन्द्र इवेत्यत्र चन्द्रसदृशमित्येतद्गतात्पृथगलङ्कारतापत्तिरिति चेत् ? अत्रायमाशयो भवति यत्—यदा भवन्तः गौणसारोपायाः लक्षणायाः स्थले चन्द्रादिपदस्य धर्मिणि लक्षणां स्वीकृत्य मुखेन सहाभेदान्वयमेव स्वीकुर्वन्ति, तदा 'मुखचन्द्र' इत्यस्मिन्

रूपके—'चन्द्रवन्मुखम्' इत्युपमायां द्वयोः चन्द्रसदृशेनाभिन्नं मुखमित्येकप्रकारस्य बोधो भविष्यति, पुनस्तदाऽनयोर्द्वयोरलङ्कारयोर्को भेदः ? अस्याः शङ्काया एव समाधानार्थं प्राचामभिमतं समाधानत्रयं प्रस्तुतमस्ति । तन्मतेषु तृतीयं मतं प्रश्नसम्बन्धितमस्ति । तद्यथा—'अपरे तु—भेदकरम्बितं सादृश्यमुपमाजीवातु-भूतम्, भेदाकरम्बितं च गौणसारोपलक्षणाया इत स्फुटे भेदे कृतं फलकृतवैल-क्षण्यपर्यन्तानुधावनेन । पक्षेऽस्मिन् भेदगर्भसादृश्यप्रतिपत्तेस्ताद्रूप्यप्रतीतिः कथं नाम फलं भवितुमीष्टे ? इत्यनुपपत्तिं परिहर्तुमायासोऽपि नापततीत्यपरमनुकूलम्' इत्यप्याहुः ।

अत्रायं सारांशः—प्रस्तुतविषयस्यानुपदोक्ते द्वितीयमतेऽपि ग्रन्थकारस्य अरुचेः प्रतीतिर्भवति, तत्कारणमिदमस्ति यत्—अप्रसिद्धस्य कार्यकारणभाव-स्योपस्थितशाब्दबोधस्य च भिन्नरूपतामस्वीकृतेऽपि निर्वाहो भविष्यति, तदा तयोर्विचारयोः स्वीकृतिः कथं भवेत् ? अत एवाधुना तृतीयमतस्योल्लेखः । तथा हि—कतिपयविदुषां कथनमस्ति यत् यदा सादृश्यपदार्थस्य स्वरूपस्य विषये मतद्वयं मान्यमस्ति, ययोरेकस्यानुसारं तद्भिन्नो भूत्वा तदवस्थितैरधिकतरैः धर्मै-र्युक्तत्वमेव सादृश्यपदार्थः, अन्यमतानुसारञ्च सादृश्यमेकमखण्डोपाधिक-भिन्नो धर्म एवास्ति । तदा कथं न द्वयोर्मतयोरनुसारमुपमां रूपकञ्च न विभजेत् ? अर्थात् प्रथममते सिद्धभेदाभेदयोर्द्वयोः सम्मिलितं सादृश्यपदार्थमुपमायाः प्रयोजकः स्वीकुर्यात्, द्वितीयमतञ्च—सिद्धभेदांशरहितं सादृश्यपदार्थं रूपकस्य नियामकः मन्तव्यः । तदनुसारं चन्द्रसदृशं मुखमित्यादि उपमास्थले चन्द्राद्भिन्नोऽपि चन्द्र-वृत्तिगुणयुक्तं मुखं मुखचन्द्रञ्चेत्यादिरूपकस्थले केवलं चन्द्रवृत्तिगुणयुक्तं मुखम् इति प्रकारद्वयस्य बोधो जायते । अनेन प्रकारेण यदा स्वरूपसंवेदन-प्रयुक्तभेद एवोभयत्र सुस्पष्टं भवति, तदा फलप्रयुक्तभेदस्यानुसरणं निरर्थकमस्ति । लक्षणया यदा भेदघटित-सादृश्यस्य प्रतीतिः पूर्वमेव भवति, तत्पश्चात् व्यञ्जनयापि ताद्रूप्यस्य प्रतीतिः कथं भविष्यति ? अस्याः आशङ्काया उत्तरे पूर्ववर्त्तिनौ द्वावपि मतवादिनौ एतत्कथनमनिवार्यमासीत् यत्—वैयञ्जनिकबोधे बाध-निश्चयः प्रतिबन्धको न भवति, सोऽप्यस्मिन् मतेऽकथनीयं वर्त्तते । यतः एत-दनुसारभेदेनामिश्रितस्य सादृश्यस्य बोधः रूपकस्थले लक्षणया स्वीक्रियते । तदित्थं प्राचामाशयो मतभेदेन वर्णितः ।

( ५१ ) **प्रश्नः**—पण्डितराजस्य अलङ्कारनिरूपणे किमपि वैशिष्ट्यं लिखत । ( सं० सं० विश्व० १९८७ )

उत्तरम्—प्रस्तुतोऽयं समीक्षात्मकः प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने लक्षणानिरूपणानन्तरं क्रमप्राप्तालङ्कार-निरूपण-प्रसङ्गात् ग्रन्थभूमिकाभागाच्च सन्दर्भितोऽस्ति। अत्र पण्डितराजाः अलङ्कार-निरूपणप्रसङ्गस्यारम्भ एव प्रतिपादयन्ति यत्—'अथास्य प्रागभिहितलक्षणस्य काव्यात्मनो व्यङ्ग्यस्य रमणीयताप्रयोजका अलङ्कारा निरूप्यन्ते'। अस्मिन्नव-तरणग्रन्थे 'रसादेः' इति न विलिख्य 'व्यङ्ग्यस्य' इति लिखितमस्ति, तेन पण्डितराजस्याभिमतमिदं निःसृतं यत्—पण्डितराजाः त्रिविधान् व्यङ्ग्यान् काव्यात्मा स्वीकुर्वन्ति। परञ्चोपमानिरूपणप्रकरणे एकत्र पण्डितराजाः आहुर्यत्—

'इयं चैवं भेदोपमा वस्त्वलङ्काररसरूपाणां प्रधानव्यङ्ग्यानां वस्त्व-लङ्कारयोश्चोपस्कारकतया पञ्चधा।'

अत्रायमाशयः—उपमा पञ्चविधा भवति, यतः सा क्वचित् वस्तुरूपं प्रधान-व्यङ्ग्यं, क्वचिदलङ्काररूपं प्रधानव्यङ्ग्यं क्वचिच्च रसादिरूपं प्रधानव्यङ्ग्यमनेन प्रकारेण त्रिविधं व्यङ्ग्यम्, एवमेव च क्वचित् प्रधानवाच्यवस्तुं, क्वचित् प्रधान-वाच्यालङ्कारमलङ्करोति। अनेनोल्लेखेन तु पण्डितराजस्य काव्यात्मविषयिणी धारणा भिन्नैव प्रतीयते, यतो हि—एतत् निश्चितमस्ति यत् यं तत्त्वं यः काव्यात्मा स्वीकृतः, सः तमेव तत्त्वमलङ्कार्यं इति कथयति। अनया गणनया यदि पण्डितराजः त्रिविधं व्यङ्ग्यमात्रं काव्यात्मा स्वीकुर्यात् तदा वाच्यवस्तुम-लङ्कार्यं न कथयेत्। एतत्प्रतिभाति पण्डितराजः सर्वविधान् रमणीयानर्थान् काव्यात्मा स्वीकुर्यात्। अस्याः धारणायाः पुष्टिः पण्डितराजस्यान्योक्त्यापि सिद्धयति।

अपरञ्चोपमालक्षणे सादृश्यस्य विशेषणं 'वाक्यार्थोपस्कारकम्' इति कथित-मस्ति 'व्यङ्ग्यार्थोपस्कारकम्' नहि। एतेन स्पष्टं भवति यत् पण्डितराजाः केवलं रमणीये वाच्यार्थे सति अपि—अर्थात् रमणीय-व्यङ्ग्यार्थस्यासत्यपि—वाक्यं काव्यमामनन्ति। विचारणीयमेतत् यत्—काव्यात्मभूतस्य तत्त्वस्याभावे-ऽपि किं काव्यत्वं स्वीकुर्यात् ? नहि। अतः सुधीजनाः कथयन्ति यत्—पण्डित-राजाः आलङ्कारिके जगति ध्वनिवादिनोऽपि रमणीयतावादिनः सन्ति। पण्डितराजानामलङ्कारनिरूपणेऽलौकिकमनिर्वचनीयञ्च वैशिष्टयं प्रतिभाति।

( ५२ ) प्रश्नः—उपमालङ्कारलक्षणं सपदकृत्यं व्याख्याय तदुदाहरणे सङ्गमयत। ( सं० सं० विश्व० १९८७ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने लक्षणानिरूपणानन्तरं प्रसङ्गप्राप्तालङ्कारनिरूपणप्रसङ्गात् सन्दर्भितोऽस्ति। तत्रोपमालङ्कारस्य सर्वातिशायि माहात्म्यं ज्ञात्वा ग्रन्थकारेण संसूचितं यत्—'तत्रापि विपुलालङ्कारान्तर्वर्तिन्युपमा तावद्विचार्यते।'

अत्रायं भावः—सादृश्यमूलकाः यावन्तोऽलङ्कारास्सन्ति तेषां सर्वेषामलङ्काराणामुपजीव्यभूतोपमैवास्ति, अतोऽलङ्कारेष्वपि सर्वप्रथममुपमायाः विचारः क्रियते। तल्लक्षणं यथा—

'सादृश्यं सुन्दरं वाक्यार्थोपस्कारमुपमालङ्कृतिः।

अत्रायं भावः—वाक्यार्थशोभाधायकस्य सुन्दरसादृश्यस्य नाम उपमालङ्कारो भवति।

लक्षणघटकं सुन्दरञ्च यथा—'सौन्दर्यं च चमत्कृत्याधायकत्वं चमत्कृतिरानन्दविशेषः सहृदय-हृदयप्रमाणकः। इति स्पष्टमेव।' अत्र पदकृत्यं यथा ग्रन्थकारमुखेन—

'अनन्वये च गगनं गगनाकारम्' इत्यादौ सादृश्यस्य द्वितीयसब्रह्मचारिनिवर्तनमात्रार्थमुपात्तत्वेन स्वयमप्रतिष्ठानादचमत्कारितैव। अत एव तस्यान्वयाभावादनन्वयं तमाहुः। व्यतिरेके 'तवाननस्य तुलनां दधातु जलजं कथम्' इत्यादौ चमत्कारिणो निषेधस्य निरूपणाय प्रतियोगिनः सादृश्यस्य निरूपणमचमत्कारकमेव। एवमभेदप्रधानेष्वपि रूपकापह्नुतिपरिणामभ्रान्तिमदुल्लेखादिषु, भेदप्रधानेषु दृष्टान्त-प्रतिवस्तूपमा-दीपक-तुल्ययोगितादिषु चमत्कारिषु तत्तन्निष्पादकतयावस्थितस्यापि सादृश्यस्य चमत्कारिताविरहेण नास्त्युपमालङ्कृतित्वम्।

अत्रेदं पदकृत्यव्याख्यानम्—गगनं गगनमिवास्ति इत्याद्यनन्वयालङ्कारेऽपि यद्यपि सादृश्यं वर्णितं भवति, तथापि तत्सुन्दरं चमत्कारी न भवति, यतः तद्वर्णनं 'वर्णनीयस्याकाशादेरन्यः कोऽपि पदार्थः सदृशो न'। इति मेवास्ति। वर्णितमपि तत्सादृश्यं वक्तुः तात्पर्यविषयीभूतं न तिष्ठति। तात्पर्यविषयाभावादेव तद्वाक्यार्थेऽन्वयो न भवति। अनया दृष्टचैवानन्वय इति नामकरणमप्यभूत्।

अत्रेदं तात्पर्यमस्ति यत्—विवक्षितं पदार्थमेव चमत्कारी भवति, अनन्वये च सादृश्यं विवक्षितं न भवति, अतः चमत्कारित्वमपि नास्ति। तवाननस्य अर्थात्—जलज = कमलं त्वदाननस्य तुलनां कथं धारयेत्? इत्यादि व्यतिरेकालङ्कारे सादृश्यस्य निषेधः चमत्कारजनको भवति। अतस्तन्निषेधस्य प्रति-

योगिनः सादृश्यस्य नान्तरीयकत्वात्—कृते सति चमत्कारशून्यमेव भवति। अनेनैव प्रकारेणाभेदप्रधान-रूपक-अपह्नुति-परिणाम-भ्रान्तिमान्-उल्लेखाद्यलङ्कारेषु भेद-प्रधानेषु च दृष्टान्त-प्रतिवस्तूपमा-दीपक-तुल्ययोगितादिचमत्कार्यलङ्कारेषु यद्यपि तदलङ्कारान् सिद्धये सादृश्यं तिष्ठति, तथापि तच्चमत्कारी न भवति।

अत्रायमभिप्रायः—रूपकाद्यलङ्काराः सादृश्यमूलकाः सन्ति, सादृश्येन विना तदलङ्काराणां सिद्धिर्न भवति, सादृश्यमस्ति द्वयोः भागयोः प्रकारद्वयेन तिष्ठतः। प्रथमे भागे ( रूपकादयः ) अभेदघटितत्वं द्वितीयभागे च भेदघटितत्वम्। अत एव प्रथमभागस्यालङ्कारेषु प्रधानतया भेदस्य प्रतीतिर्भवति। परश्च कस्यापि प्रकारस्य सादृश्ये वर्णिते वाक्यार्थोपस्कारकसादृश्यम् एतत्सामान्योपमा-लक्षणं यद्यपि तेष्वलङ्कारेषु प्रसक्तं भवेत्। यतो हि—'सादृश्यमुपमाभेदे' इति मम्मटकृतलक्षणे—यथा भेदस्य निवेशः, तथा पण्डितराजस्योक्तलक्षणे न। तथापि पण्डितराजानुसारं सादृश्ये सुन्दरविशेषणयोजने नैषामलङ्काराणां व्यावृत्तिर्भवति। कारणश्चात्र—एष्वलङ्कारेषु रूपक-आदिरेव भिन्न-भिन्नप्रकाराणां चमत्काराणां जनकाः भवन्ति। अत एव विभिन्नाः अलङ्काराः स्वीक्रियन्ते। सादृश्यमूलरूपे स्थित्वाऽपि एषु सर्वेषु स्थानेषु चमत्कारशून्यमेव तिष्ठति।

**सारभूतमिदं तथ्यं समायाति पुरतः—**

'सुन्दर' अस्य विशेषणस्य निवेशेन—अपह्नुति-व्यतिरेक-रूपकाद्यलङ्कारेषु चातिव्याप्तिर्न भवति।

**( ५३ ) प्रश्नः—अप्पयदीक्षितोक्तमुपमालक्षणं पण्डितराजरीत्या समीक्ष्य स्वमतं प्रदर्शयत। ( सं० सं० विश्व० १९७६ )**

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने निरूपितायाः उपमाया प्रकरणात् सन्दर्भितोऽस्ति। इतः पूर्वमुपमाया उदाहरणे स्मृतिभाव एवात्र प्रधानव्यङ्ग्यं कथं न स्वीकुर्यादित्येतस्य सुचारुविश्लेषणं विद्यते। तदनु प्रश्नाकारस्य समायाति। सम्प्रति प्राचीनालङ्कारिकोक्तोपमालक्षणे कथितानां विसङ्गतीनां समीक्षणं विद्यते, तत्क्रमे श्रीदीक्षित-कृतोपमालक्षणे विप्रतिपत्तीनामालोचनायोपक्रमते ग्रन्थकारः। तद्यथा—

'अप्पयदीक्षिताः पुनश्चित्रमीमांसायाम्—'उपमिति क्रियानिष्पत्तिमत्सादृश्यवर्णनमदुष्टमव्यङ्ग्यमुपमालङ्कारः। स्वनिषेधापर्यवसायि सादृश्यवर्णनं वा ग्रामूतं तथा' इति लक्षणद्वयमाहुः। तच्चिन्त्यम्। वर्णनस्य विलक्षणशब्दा-

त्मकस्य विलक्षणज्ञानात्मकस्य वा शब्दवाच्यताविरहेणार्थालङ्कारताया बाधात्। तस्य सर्वथैवाव्यङ्ग्यत्वाद् व्यङ्ग्यत्वविशेषणवैयर्थ्याच्च।

अत्रायमाशयः—श्रीमताऽप्पयदीक्षितेन चित्रमीमांसानामके स्वकीयेऽलङ्कार-ग्रन्थे उपमालक्षणस्य लक्षणद्वयं निर्धारितमस्ति। ययोरेकस्याभिप्रायोऽस्ति यत्—एतादृशं सादृश्यवर्णनमुपमालङ्कार इति कथयन्ति, यत्र न कोऽपि दोषः स्यात् न वा व्यङ्ग्यः, अर्थात् वाच्यः स्यात्, येन चोपमिति-क्रियातुलनायाः सिद्धिर्भवेत्। तथैव द्वितीयलक्षणस्याशयश्च यथा—उपमायाः निषेधे यस्य पर्यवसानं न भवेत्, एतादृशं दोषहीनमथवाऽव्यङ्ग्यसादृश्यवर्णनमुपमेति कथयन्ति। परञ्चैते लक्षणेऽसङ्गते स्तः। कारणञ्चात्रैतयोर्द्वयोर्लक्षणयोः सादृश्यवर्णनमुपमालङ्कारत्वे न स्वीकृतम्। वर्णनञ्च भवति—शब्दात्मकमथवा ज्ञानात्मकमथवा वर्णनस्य रीतिद्वयम्। एका बाह्याऽन्या च मानसी। तयोर्द्वयोर्बाह्यवर्णनं शब्दरूपे भवति, मानसवर्णनञ्च ज्ञानरूपे। अस्यां स्थितौ शब्दानां शब्दवाच्यत्वेन, यदि त्व केनापि प्रकारेण शब्दं शब्दवाच्य इति स्वीकुर्यादपि तथापि ज्ञानस्य तु सर्वथा शब्दवाच्याभावेन वर्णनस्यार्थालङ्कारत्वं बाधितं भवेत्।

अत्रायं सारांशः—यस्मिन् वस्तुनि शब्दस्याभिधाशक्तिस्तिष्ठति तद्वस्तु वाच्यं भवति, तमेवार्थ इति कथ्यते, तदेव च वाच्यं वस्तु यदा साक्षादथवा परम्परया रसादिकं सुशोभितं करोति तदा तदर्थालङ्कारः कथ्यते। अस्यां परि-स्थितौ यस्मिन् शब्दस्याभिधा न भवेत् यद्धि शब्दवाच्यं न भवेत्, तं ( वर्णनम् ) अर्थालङ्कारस्वीकरणं नितान्तमनुचितमस्ति। अन्यच्च—शब्दात्मकमथवा ज्ञानात्मकं वर्णनंक स्यामपिदशायां व्यङ्ग्यं न भवितुमर्हति। अतः सादृश्यवर्णने 'अव्यङ्ग्य' विशेषणमपि व्यर्थमेवास्ति। साम्प्रतं दीक्षितकृतं लक्षणं सङ्गति-सिद्ध्यर्थं पूर्वपक्षमुपस्थाप्य खण्डयन्ति पण्डितराजाः, तद्यथा—

"अथ यदि वर्णनविषयीभूतं तादृशं सादृश्यमुपमेत्युच्यते, तदा यथा गौस्तथा गवय इत्यत्रोपमालङ्कारापत्तेः। एवं 'कालोपसर्जने च तुल्यम्' इत्यादावपि। अशिष्यत्वादिना प्रधानप्रत्ययार्थवचनसादृश्यस्यात्रापि प्रतिपादनात्"।

अत्रायं भावः—यदि भवन्तः कथयेयुः यद् वर्णनस्य विषये अर्थात् वर्णने समागतैः विशेषणैः युक्ता सादृश्योपमाऽस्ति। अतः उक्तदोषाः न भविष्यन्ति, एतत् सत्यं, ते दोषाः न भविष्यन्ति, अन्ये दोषास्तु तदाऽपि भविष्यन्ति। यथोक्तलक्षणानुसारं यथा गौस्तथा गवयः भवति, अस्मिन् वाक्ये उपमालङ्कारो

भविष्यति, यतो हि दोषरहितं वाच्यसादृश्यमत्रास्ति। अनेनैव प्रकारेण 'कालोपसर्जने च तुल्यम्' इति पाणिनिसूत्रेऽपि उपमालङ्कारस्यापत्तिर्भविष्यति।

अस्य द्वितीयदोषस्य स्पष्टं विवरणमस्ति—'प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्'।

पुनश्च, उपस्थितस्य द्वितीयदोषस्य वारणमाशङ्क्य निराकरणं करोति यथा—'न चात्र वचनभेदस्य दोषस्य सत्त्वाददुष्टत्वविशेषणेन वारणं भविष्यतीति वाच्यम्। एतद्वाक्योपप्लुतवाक्यान्तरप्रतिपादितैकोपमेयके सादृश्ये तथाप्यतिप्रसङ्गात्'।

अपरञ्च—उपर्युक्तलक्षणसङ्गत्यर्थं सकलदोषनिरासमुपपाद्य पुनरन्यदीयं दृढीकरोति। 'न चात्रोपमितिक्रियाया निष्पत्तावपि न सादृश्यवर्णनम्। विषयस्याचमत्कारित्वात्। चमत्कारविषयककविव्यापारस्यैव वर्णनपदार्थत्वादिति वाच्यम्। इत्यादि।

पर्यन्ते निष्कर्षमाह—'अपि च लक्षणे सादृश्यविशेषणं निरर्थकम्। उपमिति क्रियानिष्पत्तिमद् वर्णनमुपमा, इत्येतावतैव स्वाभीष्टार्थलाभात्।'

उक्तयोर्द्वयोः लक्षणयोः वर्णनेन सह यत् 'सादृश्यस्य' इति विशेषणं सम्पृक्तमस्ति, तन्निरर्थकमिति—यतः 'उपमितिक्रियासिद्धिवर्णनमुपमालङ्कारः' इति कथनेनैव भवतामिष्टसिद्धिः। कारणञ्चात्र सादृश्याद् भिन्नस्य कस्याप्यर्थस्य वर्णनेनोपमितिक्रियायाः सिद्धिर्भविष्यत्येव नहि। अतः सादृश्यपदस्यानुपस्थितावपि वर्णनेन सादृश्यस्यैव वर्णनम्। सारांशश्चात्र दीक्षितस्योपमालक्षणं समीचीनं नास्तीति।

(५४) प्रश्नः—'साधर्म्यमुपमा भेदे' इति प्रकाशोक्तलक्षणस्य खण्डनप्रकारम् उपवर्ण्यताम्। (सं० सं० वि० १९८८)

प्रस्तुतोऽयं खण्डनात्मकः प्रश्नः साहित्याचार्यवरेण्य-जगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने उपमानिरूपणप्रसङ्गात् सम्बन्धितोऽस्ति। अत्राप्पयदीक्षित-विद्यानाथाद्यन्यप्राचीनविदुषामुक्तानि लक्षणानि पर्यालोच्य तत्र सुस्पष्टं मतमुपस्थाप्याधुना मम्मटाचार्योक्तं लक्षणं परीक्षते। तद्यथा—

"एवं काव्यप्रकाशोक्तमपि (मम्मटोक्तम्) 'साधर्म्यमुपमा भेदे' इति लक्षणं नातीव रमणीयम्"। व्यतिरेके निषेधप्रतियोगिनि सादृश्येऽतिव्यापनात्। न च पर्यवसितत्वेन साधर्म्यं विशेषणीयमिति वाच्यम्। अनन्वयस्थसादृश्यस्यापर्यव-

सायित्वेनैव वारणे भेदविशेषणवैयर्थ्यापत्तेः । काव्यालङ्कारप्रस्तावे लौकिकालौकिकप्रधानवाच्यव्यङ्ग्योपमासामान्यलक्षणकरणानौचित्याच्च' ।

अत्रायमाशयः—अन्याचार्यकृतलक्षणानामिव काव्यप्रकाशे आचार्यमम्मटेन कृतं लक्षणमस्ति—'साधर्म्यमुपमा भेदे' इति, अर्थात् भेदे' स्थिते उपमानोपमेययोः द्विधा विभक्तयोः सादृश्यं नाम—उपमेति । एतल्लक्षणमपि नातिरुचिकरम् । कारणमत्र सुस्पष्टमस्ति—अस्यापि लक्षणस्य पूर्वोक्ते व्यतिरेकालङ्कारस्य निषेधप्रतियोगिनि सादृश्येऽतिव्याप्तिर्भविष्यति भवति वा । साधर्म्ये पर्यवसितं यत्सादृश्यं स्वरूपे एव पर्यवसितं भवेत्, पर्यन्ते स्वरूपे तिष्ठेत् । अत्र तात्पर्यमस्ति निषेधरूपे यत्परिणतं न भवेत् एवम्भूतमिदं विशेषणं संलग्नादपि लक्षणं निर्दुष्टं न भविष्यति । यतो हि तस्य विशेषणस्य प्रयुक्तेऽपि यथा व्यतिरेकस्थलीये निषेधे पर्यवसितस्य सादृश्यस्य वारणं भविष्यति, तेनैव प्रकारेण तद्विशेषणेनानन्वयस्थलीये निषेधरूपे परिणति प्राप्तवतः सादृश्यस्यापि वारणं भविष्यत्येव । पुनः भेदेऽर्थाद् भेदस्थिते एतद्विशेषणं निरर्थकं स्यात्, अर्थात्—अनन्वये एकमेव वस्तु उपमानमुपमेयश्च द्वावपि तिष्ठतः, अतः उपमानोपमेयौ द्वौ स्यातामेतदर्थकं भेदे इति विशेषणमुपमालक्षणे संयोजयतः स्मः । येनानन्वये तत्प्राप्तिः न स्यात् । परन्त्वधुना यदा हि भवन्तः सादृश्ये पर्यवसितमिति विशेषणं संयोजयन्ति, तद् विशेषणं व्यर्थं भविष्यति, कारणञ्चात्र व्यतिरेकस्येवानन्वयेऽपि तद्विशेषणेनैव कार्यं प्रचलिष्यति । यदि चेत् भवन्तः कथयिष्यन्ति 'भेदे' विशेषणस्य वैयर्थ्यं न भविष्यति, तदाहं लक्षणा-आदिभिः तस्यैवार्थः पर्यवसित इति स्वीकरिष्यामि । तथापि चात्र न निस्तारः । कारणमस्ति, अनेन विशेषणवैयर्थ्यदोषेण मुक्ति प्राप्ते सति लक्षणेऽन्यो दोषः आपतति । अत्रेदं तात्पर्यमस्ति यत्—चमत्कारित्वविशेषणं यदा सादृश्ये न संयोज्यते तदेदं ( साधर्म्यमुपमाभेदे ) सामान्यं लक्षणं भवति, येन यथा गौस्तथा गवयः । अतः एतदुचितं स्यात् यत् तत्प्रकारस्यैव लक्षणं लक्षितं भवेत्, येन काव्योपयुक्तानामुपमानां सङ्ग्रहो भवेदिति । इत्यलं विस्तरेण ।

( ५५ ) प्रश्नः—अलङ्कारस्य अलङ्कारान्तरोपस्कार्यत्वं कथं भवतीत्युदाहरणद्वारा प्रमाणयत । ( सं० सं० विश्व० १९८७ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने उपमानिरूपणप्रकरणात् सम्बन्धितोऽस्ति । तत्रोपमायाः पुनः प्रकारान्तरेण पूर्वकृतभेदायाः पञ्च भेदाः निर्दिष्टाः सन्ति, ते च यथा—वस्तुरूप-

प्रधानव्यङ्ग्यः, अलङ्काररूपप्रधानव्यङ्ग्यः, रसादिरूपप्रधानव्यङ्ग्यः, वस्तुरूपप्रधानव्यङ्ग्यः, अलङ्काररूपप्रधानवाच्यश्चेति। एषां भेदानां वर्णनान्तरमेषा शङ्का जागर्ति यत्—'ननु वस्त्वलङ्कारयोरिव रसस्यापि वाच्यत्वेन षोढा वक्तुमुचिता, तत्राह—'रसादिस्तु न वाच्य इति प्रागेवाभिहितम्। अतः पञ्चैव भेदाः समुचिताः'। पुनः शङ्का जागर्ति यत्—'अलङ्कारस्य अलङ्कारान्तरोपस्कार्यत्वं कथं भवती'ति, अस्य समाधानं यथा मूलग्रन्थे—

'अथ कथमलङ्कारस्यालङ्कारान्तरोपस्कार्यत्वमुच्यते। प्रधानस्यैवालङ्कार्यत्वादिति चेत् मैवम्, अलङ्कारस्योपमादेर्ध्वन्यमानतायां प्राधान्याद्रसादिवदलङ्कारान्तरोपस्कार्यत्वे न कोऽपि तावदस्ति विरोधः। एवमेव मुख्यतया वाच्यतायामपि। यथा ह्यापणादौ विक्रीयमाणतायां कतकताटङ्कस्य रत्नाद्यलङ्कारान्तरोपस्कार्यत्वे तस्यैव च कामिनीकर्णालङ्कारतायां पुनः प्रधानान्तरसान्निध्यात् ताटङ्कस्य तद्गतरत्नानां च साक्षात्परम्परया च कर्णादिशोभोपस्कारकतया यथा तदलङ्कारत्वम्, एवमेव रसादिसान्निध्ये रूपकादेस्तदुपस्कारकस्यालङ्कारान्तरस्य च रसाद्यलङ्कारतेति।

अत्रायमाशयः—यदि कोऽपि कथयेद्यत्—पञ्चमभेदस्तु नोचितः, तथाहि—एकोऽलङ्कारोऽन्येनालङ्कारेणोपस्कृतो न भवति, यतः उपस्कार्योऽलङ्कार्यः कोऽपि प्रधानो भवति, अलङ्कारश्च स्वयं गौणो भवति, अतोऽलङ्कारः कथ्यते, अन्यं शोभाधायकं करोति। पुनः सोऽलङ्कार्यः कथं भविष्यति। अस्य समाधानमस्ति यत्—यत्रालङ्कारोपमादिः प्रधानरूपे ध्वनितो भवति, तत्र सः तेनैव प्रकारेणान्यवाच्यालङ्कारैः शोभायमानो भवति, यथा कोऽपि रसादिः। अयं सिद्धान्तः सर्वमतसिद्धोऽस्ति। यत्र च 'शिशिरेण' इत्यादिप्रकारककाव्येषु अलङ्कारः वाच्यो भूत्वापि रसादेः प्रधानान्तरस्याभावात् स्वयं प्रधानः, चमत्कारयुक्तः अत एव काव्यस्य प्राणभूतः, तत्र सोऽपि रसादेरिवाथवा ध्वनिभूतालङ्कारस्येव अन्याल्पचमत्कारी, अत एव गौणालङ्कारेण शोभितत्वस्य सौभाग्यं कथं न प्राप्नुयात्?

अत्रेदं तात्पर्यं वर्तते यत्—प्राधान्यमेव तु अलङ्कार्यतायाः मूलमस्ति, पुनः यत्र रसादिः न स्यात् न चापि कोऽपि वाच्यालङ्कार एव स्वोज्ज्वलचमत्कारेण पदावलीं काव्यरचनायाः सौभाग्यं प्रदद्यात् तत्र तु तमलङ्कारमेव मुख्यतायाः प्राधान्यं मिलिष्यति, अतस्तादृश्यां स्थित्यां पोषकरूपे वर्णितो यदि कोऽप्यन्योऽलङ्कारः स्थास्यति तदा तेन सः अलङ्कृतो भविष्यति। यत्र रसादेः सर्वप्रधानस्य

सत्ता स्यास्यति तत्र सर्वेऽलङ्काराः तमेव ( रसमेव ) अलङ्करिष्यन्ति । मिथः तदलङ्काराणामलङ्कार्यालङ्कारभावो न भविष्यति । इयं रीतिः लौकिकालङ्कारेष्वपि दृश्यते । तथा हि—यदा स्वर्णनिर्मितो ताटङ्कः ( कर्णाभरणम् ) आपणे विक्रीयमाणतया मिलति, तदा स एव प्रधानस्तिष्ठति । अतस्तस्मिन् काले रत्नाद्यन्यालङ्कारैः स शोभितो भवति, अर्थात् ताटङ्कोऽलङ्कार्यं रत्नादिश्चालङ्कारक इति ज्ञायते । परञ्च यदा स एव ताटङ्कः कामिनीकर्णयोश्चञ्चलतां दधाते, तदा सः नैव प्रधानः, तस्यां स्थितौ कामिन्या कर्णाविव प्रधानौ भवतः । अतस्ताटङ्कोऽलङ्कार्यो न । तदित्यमलङ्कारस्यालङ्कारान्तरोपस्कार्यत्वं सोदाहरणं प्रमाणितं भवति ।

( ५६ ) **प्रश्नः**—व्यङ्ग्यवस्तूपस्कारिकां व्यङ्ग्यालङ्कारोपस्कारिकां वा उपमाम् उदाहृत्य उपस्कारशब्दार्थं साधु प्रपञ्चयत ।

( सं० सं० विश्व० १९८७ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने उपमानिरूपणप्रकरणात् सन्दर्भितोऽस्ति । अस्मिन्नवसरे उपमायाः भेदनिरूपणानन्तरं पुनः प्रकारान्तरेण भेदान् निरूपयितुमुपक्रमः; तद्यथा—'इयं चैव भेदोपमा वस्त्वलङ्काररसरूपाणां प्रधानव्यङ्ग्यानां वस्त्वलङ्कारयोर्वाच्ययोश्चोपस्कारकतया पञ्चधा । एषु पञ्चप्रकारेषु प्रथमो भेदो यथा प्रश्नान्तर्गता व्यङ्ग्यवस्तूपस्कारिका—

तत्र व्यङ्ग्यवस्तूपस्कारिका यथा—

'अविरतपरोपकरणव्यग्रीभवदमलचेतसां महताम् ।
आपातकाटवानि स्फुरन्ति वचनानि भेषजानीव' ॥

अत्रोपपादनं यथा—'अत्र तादृशि वचनान्यर्थद्वारा सेवमानस्य मनागप्यक्षुभ्यतः परिणामे परमं सुखं भवतीति प्राधान्येन व्यङ्ग्यस्य वस्तुनः उपस्कारिका भेषजोपमा ।

अत्रायं भावः—उपर्युक्तेऽस्मिन् पद्ये 'यः मानवः एतादृशानां वचनानां सेवनमर्थतः करोति, अर्थादर्थं विज्ञायैषां वचनानामनुसारं व्यवहरति कटुतायाश्च भयेन किञ्चिदपि विक्षुब्धो न भवति, वचनसेवनात् पराङ्मुखो न भवति, सः परिणामे परमसुखं प्राप्नोति' । अयमर्थः—'आपातकाटवानि' इति पदेन व्यङ्ग्यो भवति । स एव व्यङ्ग्यः अस्मिन् पद्ये प्रधानोऽस्ति—काव्यव्यवहारस्य कारण-

मस्ति—अमुं व्यङ्ग्यं च शोभां प्रापयति 'भेषजानीव' भाविनो वाच्यस्यौषधस्य पूर्णोपमा। सारभूतोऽयमंशः—औषधसादृश्येन परिपुष्टो भूत्वा सोऽर्थश्चाधिकं चमत्कारमुत्पादयति।

प्रस्तुते प्रश्ने व्यङ्ग्यालङ्कारोपस्कारिकायाः वैकल्पिकं स्थानं विद्यते अतस्तस्या अपि समाधानं समुचितमिति कृत्वा समाधीयते—

व्यङ्ग्यालङ्कारोपस्कारिकाया उदाहरणं यथा—

'अङ्कायमानमलिके मृगनाभिपङ्कम्,
पङ्केरुहाक्षिवदनं तव वीक्ष्य बिभ्रत्।
उल्लासपल्लवितकोमलपक्षमूला-
श्चञ्चूपुटं चपलयन्ति चकोरपोताः॥'

अस्मिन् पद्ये नायिकां प्रति नायकस्य चाटूक्तिर्विद्यते।

अत्रोपपादनं यथा—'अत्र प्राधान्येन व्यङ्ग्ये आरोप्यमाणचन्द्रके भ्रान्तिमयलङ्कारे उपपादकस्य भालस्थमृगमदपङ्कविषयकस्याङ्काभेदारोपस्याङ्कसादृश्यरूपदोषमूलकत्वादुपमात्रालङ्कारः।

अत्रायं भावः—अङ्कायमानेत्यादि पद्ये सम्पूर्णवाक्यात् प्रधानरूपे 'भ्रान्तिमान्' अलङ्कारोऽभिव्यक्तो भवति, अर्थात् नायिकामुखं चकोरपोताः 'चन्द्र' इति पदेन जानन्ति। अत एव चन्द्रिकापानस्य कामनया ते पोताः (अर्भकाः) स्वचञ्चून् चञ्चलयन्ति, फलतः एतत् सिद्धं भवति, यदत्र भ्रान्तिमति अलङ्कारे चन्द्रस्यारोपः मुखे क्रियते। अस्यारोपस्य साधकोऽस्ति ललाटदेशे संलग्ने कस्तूरीद्रवे कलङ्कस्याभेदस्यास्यारोपस्यास्य द्वितीयारोपस्य मूलमस्ति कस्तूरीद्रवे स्थितस्याङ्कस्य सादृश्यरूपस्य दोषस्य ज्ञानम्। सादृश्यमेवोपमा विद्यते, या चात्र 'अङ्कायमान' पदे 'क्यङ्' प्रत्ययस्य वाच्यार्थोऽस्ति।

अत्रेदं तात्पर्यमस्ति यत्—'अङ्कायमान'पदेनाङ्कस्याभेदो बोधितो न भवति, अपितु अङ्कस्य सादृश्यमेव। पश्चादस्य सादृश्यस्य ज्ञानेन कस्तूरीद्रवेऽङ्कस्याभेदोऽर्थतः विदितो भवति, अत्रोपमा व्यङ्ग्यस्य भ्रान्तिमतश्चालङ्कारस्योपस्कारकोऽस्ति, पोषकोऽस्ति। यतस्तत्सादृश्यज्ञानेन कस्तूरीद्रवेऽङ्काभेदस्य ज्ञानमनेनाभेदज्ञानेन मुखे चन्द्राभेदरूपस्य भ्रान्तिमतः ज्ञानं भवति।

सामान्यतयोपस्कारशब्दस्योपकारका शोभाप्रदो वा भवति। उपस्कारिका उपकारिका शोभिका वा।

( ५७ ) **प्रश्नः**—केवलशब्दात्मकधर्मस्य उपमालङ्कारनिर्वाहकत्वं सम्भवति न वेत्युदाहरणद्वारा निर्णयत। ( सं० सं० विश्व० १९८७ )

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने उपमानिरूपणप्रकरणात् सन्दर्भितोऽस्ति। तत्रोपमायाः भेदानां सङ्ख्यानमस्ति। तद्यथा—'एवं च प्राचां मते पञ्चविंशतिभेदायाः पुनः पञ्चविधतायां सपादशतं भेदाः। द्वात्रिंशद्भेदवादिनां तु षष्टयुत्तरं शतम्। एवमुद्भावनीयेषु भेदेषु तावत् समानधर्मस्य विलक्षणतया भाविभेदानां गणना ग्रन्थकृता स्वयमेव कृता; तद्यथा—क्वचिदनुगाम्येव धर्मः, क्वचिच्च केवलं बिम्बप्रतिबिम्बभावमापन्नः। क्वचिदुभयम्। क्वचिद्वस्तु-प्रतिवस्तुभावेन करम्बितं बिम्बप्रतिबिम्बभावम्। क्वचिदसन्नप्युपचरितः। **क्वचिच्च केवलशब्दात्मकः**। अस्यैव केवलशब्दात्मकधर्मस्य प्रश्ने विशेषरूपेण जिज्ञासा वर्त्तते। अनेन प्रकारेण पञ्चमप्रभेदमुदाहर्तुमाह—

'केवलशब्दात्मको यथा—'

एतदुदाहरणं च—'यत्र वसन्ति सुमनसि मनुजपशौ च शीलवन्तः सर्वत्र समाना मन्त्रिणो मुनय इव'।

अस्मिन् गद्ये कस्यचिद्राज्यस्य वर्णनमस्ति यत्—यत्र सदाचारिणः सचिवाः मुनीनामिव तिष्ठन्ति, यतो हि ते विद्वत्सु महामूर्खेषु च समानाः सन्ति अर्थात् मुनयः समदृष्टिसम्पन्नाः सन्ति, मन्त्रिणश्च सर्वेषु समानादरभाजिनः सन्ति।

अत्रोपपादनं यथा—'अत्रोपमानोपमेयगतस्यार्थस्यैकस्याभावाच्छब्द एव धर्मः'।

अत्रायं भावः—अस्मिन् गद्यकाव्ये मुनेः मन्त्रिणश्च या उपमाऽस्ति तस्यां कोऽप्येतादृशोऽर्थरूपः साधारणधर्मो नास्ति, उपमानोपमेययोर्द्वयोः स्थायी स्यात्। अत्रेदं तात्पर्यमस्ति यत् साधारणधर्मस्य बोधकपदमस्त्यत्र 'समानाः' परञ्चास्य पदस्य मुनेः मन्त्रिणश्च पक्षे एकोऽर्थो न भवति, अतः एतत् स्वीकर्त्तव्यं यत्—सः शब्द एवात्र साधारणधर्मरूपोऽस्ति। इमामुपमामेवान्यत्र शाब्दी-उपमा कथ्यते।

( ५८ ) **प्रश्नः**—क्वचिदुदाहरणे बिम्ब-प्रतिबिम्बभावं वस्तु-प्रतिवस्तुभावं वा सम्यङ्निर्दिश्य तदुपयोगः प्रसाध्यताम्।

( सं० सं० वि० १९८८ )

उत्तरम्—प्रस्तुतोऽयं विषयः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने उपमानिरूपणप्रसङ्गात् सम्बन्धितोऽस्ति। तत्र पञ्चविधोपस्कारकोपमानिरूपणानन्तरं केवल-बिम्बप्रतिबिम्बभावापन्नयुतायाः उपमायाः उदाहरणमस्ति—

'कोमलातपशोणाभ्रसन्ध्याकालसहोदरः।
कषायवसनो याति कुङ्कुमालेपनो यतिः॥'

इत्युद्दिश्य ग्रन्थकारेणोक्तं यत्—'केवल-बिम्ब-प्रतिबिम्बभावापन्नः कोमलातपशोणाभ्र—इत्यत्र बोध्य' इति। अत्र कोमलातपत्वमिति केवलमुपमानं सायङ्काले व्यापकमस्ति कुङ्कुमालेपनञ्च केवलमुपमेये यतौ तिष्ठति, अतस्तद्द्वयोरप्येकोऽपि—उपमानोपमेयस्य साधारणधर्मयोग्यः नास्ति तथापि समानभावत्वात् तयोः धर्मयोरभेदस्यारोपः कृतः। येन तद्धर्मौ एकीभूयोपमायाः सिद्धिर्भवति। अयमेकः भिन्नधर्मयोः आरोपितोऽभेद एव बिम्बप्रतिबिम्बभावोऽस्ति।

वस्तु-प्रतिवस्तुभावश्च—'तृतीयोऽपि त्रिविधः—विशेषणमात्रयोर्विशेष्यमात्रयोस्तद्युगलयोर्वा वस्तु-प्रतिवस्तुभावेन करम्बितः'। अत्रायमाशयः—वस्तु-प्रतिवस्तुभावेन मिश्रितस्य बिम्बप्रतिबिम्बभावापन्नस्य समानधर्मस्यापि प्रकारत्रयं भवति, तत्राद्यः केवलविशेषणानां वस्तु-प्रतिवस्तुभावेन मिश्रितः, द्वितीयः केवलविशेष्याणां वस्तु-प्रतिवस्तुभावेन मिश्रितः, तृतीयश्च विशेषणविशेष्ययोर्द्वयोर्वस्तु-प्रतिवस्तुभावेन मिश्रितः। तत्राद्यस्योदाहरणं यथा—

'चलद्भृङ्गमिवाम्भोजमधीरनयनं मुखम्।
तदीयं यदि दृश्येत कामः क्रुद्धोऽस्तु किन्ततः॥'

प्रस्तुतेऽस्मिन् पद्ये उपपादनं यथा—
'अत्र चलनाधीरत्वयोर्विशेषणयोर्वस्तुत एकरूपयोरपि शब्दद्वयेनोपादानाद् वस्तु-प्रतिवस्तुभावः। तद्विशेषणकयोश्च भृङ्गनयनयोर्बिम्बप्रतिबिम्बभावः।' इति करम्बितोऽयमुच्यते।

केवलविशेष्याणां वस्तु-प्रतिवस्तुभावेन मिश्रितस्य द्वितीयभेदस्योदाहरणं यथा—

'आलिङ्गितो जलधिकन्यकया सलीलं,
लग्नः प्रियङ्गुलतयेव तरुस्तमालः।

देहावसानसमये हृदये मदीये,
देवश्चकास्तु भगवानरविन्दनाभः ॥'

अत्रोपपादनं यथा ग्रन्थकारमुखेनैव—

अत्रालिङ्गितत्वलग्नत्वयोर्वस्तु-प्रतिवस्तुभावः, तद्विशेष्यकयोश्च जलधि-कन्या प्रियङ्गुलतयोर्बिम्ब-प्रतिबिम्बभावः । इत्ययमपि तत्करम्बित एव । इत्यलं पल्लवितेन ।

( ५९ ) प्रश्नः—'यथा लतायाः स्तबकानतायाः' इत्यादिपद्ये सयुक्तिमुपमाभेदं विवेचयत । ( सं० सं० विश्व० १९७६ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजविरचितस्य रसगङ्गाधरस्य द्वितीयानने उपमानिरूपणप्रकरणात् सन्दर्भितोऽस्ति । तत्रानेकविधाः उपमाः सोदाहरणपुरस्सराः प्रतिपादिताः सन्ति—अनन्तरमितोऽप्यन्यभेदानां सम्भावनामाह ग्रन्थकारः—'प्रकारान्तरं च लक्ष्यानुसारेण सुधीभिः स्वयमुन्नेतुं शक्यमिति निर्देशानुसारेण प्रकारान्तरेणोपमायाः भेदनिरूपणायोदाहरणं तावत् प्रस्तूयते' । तद्यथा—

'यथा लतायाः स्तबकानतायाः स्तनावनम्रे नितरां समाऽसि ।
तथा लता पल्लविनी सगर्वे शोणाधरायाः सदृशी तवापि ॥

अस्मिन् पद्ये नायकस्य नायिकां प्रत्युक्तिर्वर्त्तते । 'हे स्तनावनते नायिके ! यथा पुष्पस्तबकैर्नमितायाः लतायास्तुल्यमस्ति, तेनैव प्रकारेण 'हे सगर्वे ! त्वां लतायाः उपमानं विज्ञाय ? पल्लवैर्युक्ता लताऽपि शोणाधरास्तव सदृशी तुल्या वर्त्तत' इति ।

अत्रोपपादनं यथा—

'अत्र स्तनावनम्राहं स्तबकानताया लताया उपमानमस्मीति गर्वं मा विदध्याः । यतः शोणाधरायाः उपमेयायास्तवापि पल्लविनी लतोपमानं भवतीति वाक्यार्थे यथातथापदप्रतिपाद्या कान्तोपमानिका लतोपमेयिकोपमा निष्पादिका । अस्यां चोपमायां निरूपकतासम्बन्धेनोपमानोपमेयगते द्वे उपमे समसदृशशब्दाभ्यां प्रतिपादिते बिम्बप्रतिबिम्बभावमापन्ने साधारणधर्मतया स्थिते । तत्र निरूपकतासम्बन्धेन प्रधानीभूतोपमोपमानकान्तागतायामुपमायां प्रतिबिम्बभूतायां गुच्छस्तनयोर्वस्तु-प्रतिवस्तुभावापन्ननमननम्रीभवनविशेषणयोर्बिम्ब-प्रतिबिम्बभावमापन्नयोः साधारणधर्मत्वम् । एवं तेनैव सम्बन्धेन लतारूपोपमेयगतायां बिम्बभूतायामुपमायामधरपल्लवयोः ।

अत्रायमाशयः—उपर्युक्तेन 'यथेति' पद्येन तात्पर्यार्थोऽयं निःसरति यत्—हे सुन्दरि ! स्तनभारविनताऽहं पुष्पस्तबकैर्विनम्रायाः लतायाः उपमानमस्मि, कामपि पुष्पस्तबकावनतां लतां दृष्ट्वा कवयः—'इयं लता स्तनभारविनताया कामिन्याः इव' अस्मिन् रूपे मया सह लतायास्तुलनां कुर्वन्ति, मम तुलना लतया न हि–दर्पोऽयं मा कुरु, यतः रक्ताधरोष्ठी त्वं उपमेया भवति, अर्थात् रक्ताधरमादाय तव तुलना विधेया भवति, तदा पल्लवयुक्ता लता तवोपमानं भवति। अस्य तात्पर्यार्थस्य सिद्धि करोति, 'यथा तथा च' इत्येतैः पदैः प्रतिपादिता सोपमा, यस्यां सुन्दरीनायिकोपमानमस्ति लता चोपमेया। इतोऽप्यग्रे महती समीक्षा परम्परा विद्यते। अन्ते तात्पर्यमिदमस्ति यत्—बिम्ब-प्रतिबिम्बापन्ने द्वे उपमे प्रधानोपमायां साधारणरूपे स्तः। धर्मरूपयोर्द्वयोरुपमयोर्मध्यतः प्रधानोपमाया उपमाने 'कान्तायां' निरूपकतासम्बन्धेन स्थायिनी 'त्वं लतेव' इयमुपमा प्रतिबिम्बरूपा विद्यते।

अत्रेदं सारतत्त्वम्—एतेषामुपर्युक्तानां विवेचनानां सारांशोऽयमस्ति यत्—प्रकृतपद्ये ( यथा लतायाः स्तबकानतायाः ) तिस्रः उपमाः सन्ति यास्वेका प्रधानभूतोपमा द्वयञ्च बिम्ब-प्रतिबिम्बभावापन्ना सम्भूय तां प्रधानोपमां सिद्धा साधारणधर्मरूपा। साधारणधर्मरूपयोरुपमयोः प्रथमोपमायाः साधारणधर्मोऽस्ति वस्तु-प्रतिवस्तुभावेन मिश्रिता बिम्ब-प्रतिबिम्बभावापन्ना, तथा च द्वितीयोपमायाः केवलं बिम्ब-प्रतिबिम्बभावापन्ना। द्वयोरुपमयोरेव तृतीयोपमायां समानधर्मता। अस्योदाहरणस्य महती विचित्रता। अतः एवम्भूतामुपमां नवीनोपमाप्रभेदस्य रूपे गणना समुचितैव। इत्यलं पल्लवितेन।

( ६० ) प्रश्नः—यच्चाप्पयदीक्षितैः लुप्तायां नैवं भेदाः, तस्यां साधारणधर्मस्यानुगामिता नियमात् इत्युक्तम्, तन्न, इत्यत्र दीक्षिताशयं प्रतिपाद्य तत्र जगन्नाथः कं दोषं पश्यतीति विशदयत।

( सं० सं० विश्व० १९७५ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने उपमानिरूपणप्रसङ्गात् सम्बन्धितोऽस्ति। तत्राप्पयदीक्षितकृतोपमालक्षण-भेदादिविषयेषु पण्डितराजस्य महत्तारतम्यं तिष्ठति। तेषु विषयेषु शङ्कासमाधानं त्वस्त्येव, पुनः लुप्तोपमामधिकृत्य दीक्षितोक्तिमेवालोचयति पण्डितराजः। तद्यथा—''यच्चाप्पयदीक्षितैः 'लुप्तायां तु नैवं भेदाः। तस्यां साधारणधर्मस्यानुगामिता नियमात्' इत्युक्तम्, तन्न। 'मलय इव जगति पाण्डु-

वल्मीक इवाधिधरणि धृतराष्ट्रः' इत्यत्रानुगामिधर्मस्याप्रत्ययाच्चन्दनानां पाण्डवानां सर्पाणां दुर्योधनादीनां च बिम्बप्रतिबिम्बभावस्यैव प्रतिपत्तेः।"

अत्रायमाशयः—लुप्तोपमायान्तु एतादृशाः भेदाः न भवन्ति, यतो हि तस्यां साधारणधर्मस्यानुगामित्वं निश्चितमस्ति—अर्थात् लुप्तोपमायां साधारणो धर्मं अनुगाम्येव भविष्यति। अन्यस्य कस्यापि प्रकारस्य न, सोऽपि सङ्गतो न। कारणञ्चात्र—'मलय इव' अर्थात् जगति पाण्डु–पाण्डवानां पिता मलयाचलस्य तुल्यमस्ति, धृतराष्ट्रश्च कौरवानां पिता—अस्यां पृथिव्यां वल्मीकस्येव। अस्यां धर्मलुप्तायां कोऽप्यनुगामी समानधर्मः विदितो न भवति। अतः समान-धर्मस्य पूर्त्यै चन्दनानां पाण्डवानाञ्च तथैव सर्पाणां दुर्योधनादिकौरवाणां बिम्ब-प्रतिबिम्बभाव एव स्वीकर्त्तव्यः।

किमत्र बिम्ब-प्रतिबिम्बभावस्यासम्भवत्वं विद्यते, इत्याशङ्क्य समाधत्ते; तद्यथा—'न च शब्देनोपात्तत्वं बिम्ब-प्रतिबिम्बभावे तन्त्रमित्याग्रहो विदुषामुचितः'। श्रौतत्वार्थत्वाभ्यां बिम्ब-प्रतिबिम्बभावस्य द्वैविध्यौचित्यात्। अत एवाप्रस्तुतप्रशंसादौ प्रकृताप्रकृतवाक्यार्थयोरौपम्यमवयवबिम्ब-प्रतिबिम्बभावमूलं सङ्गच्छते।

अत्रायम्भावः—बिम्ब-प्रतिबिम्बभावाय तेषां पदार्थानां येषां बिम्ब-प्रतिबिम्बभावोऽभीष्टो भवेत्, शब्देनोपात्तत्वमपेक्षितमस्ति। अयमाग्रहः विद्वद्भ्यो नोचितः, औचित्यमेवास्मिन्नेवास्ति, यत् शब्देनोपादानस्थले श्रौतः शब्दतश्चोपादानेऽपि—अर्थतः प्रतीतावपि—आर्थः, अनेन प्रकारेण प्रकारद्वयस्य बिम्ब-प्रतिबिम्बभावः स्वीकुर्यात्, अत एव तु अप्रस्तुतप्रशंसाद्यलङ्कारेषु अप्रस्तुत-प्रस्तुतवाक्यार्थैश्च सादृश्यं सङ्गतं भवति, येषां मूलं तद्वाक्यार्थानामवयवानां बिम्बप्रतिबिम्बभावः। यद्यार्थः बिम्ब-प्रतिबिम्बभावः न स्वीकुर्यात् तदा प्रस्तुतेन वाक्यार्थेन सहाप्रस्तुतवाक्यार्थस्य सादृश्यं कथम्, यतस्तत्र प्रस्तुतवाक्यार्थस्य प्रतिपादकः एकोऽपि शब्दः उल्लिखितो न भवति।

( ६१ ) प्रश्नः—उपमायाः रशनोपमा-मालोपमादिभेदेष्वन्यतममुपपाद्य तच्चमत्कारमूलमन्विष्यताम्। ( सं० सं० वि० १९८८ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने उपमानिरूपणप्रकरणात् सन्दर्भितोऽस्ति। तत्र मालारूपशुद्धपरम्परितायाः उपमायाः निरूपणानन्तरं तद्भेदायाः रशनोपमायाः लक्षणोदाहरणे स्तः। तद्यथा क्रमेण—

उपमेयानां स्वस्वोपमानानुपमानानामुपमानतायां रशनोपमा। अत्रायं
—यदा कोऽप्युपमेयः स्वोपमानेन भिन्नस्य कस्यापि पदार्थस्योपमानं
दा तामुपमां रशनोपमेति कथयन्ति। अत्र स्वोपमानेन भिन्नस्य कस्यापि
स्य एतत्कथनमुपमेयोपमायामतिव्याप्तिदोषस्य निराकरणार्थमस्ति, यतः
योपमायामपि उपमेयः उपमानं भवति, परञ्च स्वोपमानस्यैव।

एतदुदाहरणं यथा—

'वागिव मधुरा मूर्तिर्मूर्त्तिरिवात्यन्तनिर्मला कीर्तिः।
कीर्तिरिव जगति सर्वस्तवनीया मतिरमुष्य विभोः॥'

प्रस्तुतोदाहरणगतं विशेषवाक्यमाह—'इयं धर्मभेदे' विभिन्नसाधारणधर्म-
स्थितावुक्तोदाहरणे रशनोपमा जाता।

सम्प्रति धर्मैक्ये सति विचारः—धर्मैक्ये त्विति। साधारणधर्मस्यैकत्वे
सत्युदाहरणं यथा—

'भूधरा इव मत्तेभा मत्तेभा इव सूनवः।
सुता इव भटास्तस्य परमोन्नतविग्रहाः॥'

अत्र परमोन्नतविग्रहत्वमेक एव तिसृषु उपमासु साधारणो धर्मः।

सम्प्रति धर्मलुप्तायाः रशनोपमायाः उदाहरणं प्रस्तौति—'धर्मलोपे तु
यस्यानन्तरं 'भटा इव युधि प्रजाः' इति बोध्यम्। भूधरा इवास्मिन्नेव पद्ये
' इत्यग्रे यदि 'भटा इव युधि प्रजाः' इत्येष पाठो भवेत् तु तदेव पद्यं—
प्ता रशनोपमायाः उदाहरणं भवेत्।

( ६२ ) **प्रश्नः—अरविन्दमिव सुन्दरमित्यत्र शाब्दबोधसरणिं प्रकटी-**
**।** ( सं० सं० विश्व० १९८७ )

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य
याननें उपमा( अलङ्कार )निरूपणप्रसङ्गात् सन्दर्भितोऽस्ति। तत्रार्थ-
मूलकोपमाध्वनेरुदाहरणानन्तरमुपमास्थलीयशाब्दबोधविचारावसरे—'अर-
मिव सुन्दरमित्यत्र शाब्दबोधविचारमारभते। तद्यथा मूलरूपेण—

''अथात्र सादृश्यस्य पदार्थान्तरत्वे बोधो विचार्यते—अरविन्दसुन्दरमित्यत्रा-
दनिरूपितसादृश्यप्रयोजकं लक्ष्यते। तच्च सुन्दरपदार्थैकदेशेन सौन्दर्येणा-
संसर्गेणान्वेति। तेनारविन्दनिरूपितसादृश्यप्रयोजकाभिन्नसौन्दर्यवदभिन्नमिति
। निपातातिरिक्तनामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वादभेदानुसरणम्। एक-

देशान्वयस्तु देवदत्तस्य न प्रेत्यादाविवात्राप्यभ्युपेयः। 'समासस्यैव विशिष्टा शक्तिः' इत्येके। 'अरविन्दपदमेव लक्षणया सर्वार्थबोधकं सुन्दरपदं तु तात्पर्य ग्राहकम्' इत्यपरे।"

अत्रायं सारांशभावः—अस्मिन् प्रकरणे मुख्या जिज्ञासा भवति शाब्दबोध ज्ञानम्। शाब्दबोधपदस्य सामान्योऽर्थो भवति–शब्दादुत्पन्नमर्थज्ञानम्, अपरञ्च नेकशब्दसमूहादुत्पन्नं ज्ञानम्। अनयोः प्रथममर्थात् एकशब्दजन्यमर्थज्ञानं सरल मस्ति। तत्राधिका विडम्बना न भवति, यथा—भवता केनापि मुखेन 'चन्द्र इति शब्दः श्रुतः, श्रवणानन्तरं यदि भवन्तं चन्द्रपदशक्तिर्ज्ञानमस्ति, तदा तत्पदेन चन्द्रत्वधर्मयुक्तस्य चन्द्रमसः ज्ञानं भविष्यति, भवतः तज्ज्ञानमेव चन्द्र पदादुत्पन्नः शाब्दबोधो भविष्यति। परञ्च द्वितीयं पदसमूहात्मकवाक्योत्प ज्ञानं तदपेक्षया किमपि कठिनमस्ति। तस्मिन् (ज्ञाने) महत्यः विडम्बना भवन्ति।

शाब्दबोधप्रकारः—उपमावाक्यानां शाब्दबोध-ज्ञानायेदमावश्यकमस्ति, किं नाम 'सादृश्यम्'? यतो हि सादृश्यस्यैवापरा संज्ञा 'उपमेति'। अस्मि विषये मतद्वयं तिष्ठति। तत्रादौ मीमांसकानां मतमस्ति, यत् 'सादृश्यम्' एक ऽतिरिक्तः पदार्थः, कस्याप्यन्यपदार्थस्याभ्यन्तरे स्थितिर्न विद्यते। नैयायिकान मतन्त्वेतद् भिन्नम्। ते कथयन्ति यत्—'सादृश्यं' कोऽप्यतिरिक्तपदार्थो नैव द्वयोः वस्तुनोः परस्परं समानधर्मत्वं तिष्ठति, तदेव सादृश्यम्।

साम्प्रतमधुना प्रथमसादृश्यमेव मनसि निधाय शाब्दबोधविचारः प्रस्तूयते 'अरविन्दमिव सुन्दरम्' अर्थात् कमलवत् सुन्दरम्। अमुमुपमाप्रतिपादकवा गृह्णातु, अत्र पदद्वयम्—एकमरविन्दम्, अपरञ्च सुन्दरम्। अत्र मीमांसका मतानुसारं 'सुन्दरता (सौन्दर्यम्) सादृश्यञ्च विभिन्नपदार्थौ स्तः। सौन्द सादृश्यं साधयति, किञ्च न तु स्वयं सादृश्यरूपम्। नैयायिकास्तु सौन्दर्यमे सादृश्यं भवति, तद्भिन्नं न किमपि सादृश्यम्। अरविन्दमिव सुन्दरमित्यस्मि वाक्ये पदद्वयं विद्येते—अरविन्दं सुन्दरञ्च। अरविन्दपदस्य वाच्यार्थो यद्य कमलं, तथापि सोऽर्थो बाधितोऽस्ति। अर्थात् सुन्दरपदार्थेन सह शुद्ध-कमल रूपं वाच्यार्थस्यान्वयो न भविष्यति, अतः लक्षणया तत्(अरविन्द)पदस्या र्थोऽत्र—अरविन्दनिरूपितसादृश्यप्रयोजकः। अत्रेदं तात्पर्यमस्ति यत्–सादृश्यमे मध्ये अरविन्द-पदार्थं सुन्दरपदार्थञ्च संयोजयति, अरविन्दसुन्दरम् इत्यस्यार्थ भवति—अरविन्दमिव सुन्दरमिति। इत्यलमतिपर्यालोचनेन।

साम्प्रतं शाब्दबोधप्रदर्शननिमित्तकं द्वितीयमुपमाप्रतिपादकं वाक्यं यथा—
ा अरविन्दमिव सुन्दरमित्यत्रेवार्थे सादृश्येऽरविन्दस्य निरूपितत्वसंसर्गेणान्वयः।
च प्रयोजकतासंसर्गेण सौन्दर्ये। एवञ्चारविन्दनिरूपितसादृश्यप्रयोजक-
र्यवदभिन्नमिति।

अत्रायमभिप्रायः—अरविन्दमिव सुन्दरमिदं समासरहितमुपमाप्रतिपादकं
यमस्ति। अत्र 'इव' शब्दः उक्तः, अतोऽस्मिन् वाक्ये अवगतोपमा वाक्यगता
ष्यति। 'इव' इत्यस्य वाच्यार्थोऽस्ति सादृश्यम्, तस्मिन् अरविन्द-कमल-
पमानस्यान्वयः निरूपितत्वसम्बन्धेन भवति।

शाब्दबोधे तृतीयं वाक्यं यथा—'अरविन्दमिवेत्यत्र त्वरविन्दनिरूपितसादृ-
दि'ति। अरविन्दमिवेत्यस्मिन् तृतीये वाक्ये समानधर्मबोधकं सुन्दरमित्यादि
क्तं नास्ति, अतोऽत्र वाक्यगता धर्मलुप्तोपमा कथ्यते। अत्रापि अरविन्दम्
मानम्) इव पदस्यार्थसादृश्ये निरूपितत्वसम्बन्धेनान्वितो भवति, सादृ-
सुखाद्यनुक्तोपमेये स्वरूपसम्बन्धेन, अत एवानेन वाक्येन अरविन्दनिरूपित-
ययुक्तं मुखमिति शाब्दबोधो भविष्यति। इत्यलं पल्लवितेनेति दिक्।

(६३) प्रश्नः—उपमादोषाः कीदृशाः? इति दिग्दर्शनेन तत्परिचय-
चयत। (सं० सं० वि० १९८७)

उत्तरम्—प्रस्तुतोऽयं प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य
ानने उपमानिरूपणप्रकरणात् सन्दर्भितोऽस्ति। तत्रोपमाध्वनेः इवादिरव्ययः
द्योतको वाचको वेति परामर्शानन्तरं प्रसङ्गप्राप्तान् उपमादोषान्
तुमुपक्रमते; यथा—

'अथास्याश्चमत्कारस्यापकर्षकं यावत्तत्सर्वमपि दोषः। कविसमयप्रसिद्धि-
यम्, उपमानोपमेययोर्जात्या प्रमाणेन लिङ्गसङ्ख्यायां चाननुरूप्यं
-प्रतिबिम्बभावे धर्माणामुपमानोपमेयगतानां न्यूनाधिकत्वम्, अनुगामिताया-
द्यमानकालपुरुषविध्याद्यर्थकत्वम्, एवमादि।'

अत्रायमाशयः—चमत्कारस्यापकर्षकत्वमेव सामान्यरूपेण दोष इति कथ्यते।
यानि वस्तूनि—उपमायाश्चमत्कारापकृष्टजनकानि भविष्यन्ति, तानि
न उपमायाः दोषस्वरूपाणि सन्ति। तत्प्रकारकान्यनेकवस्तूनि भवि-
। यथा—सर्वप्रथमं कवीनां सिद्धान्तेषु यद्वस्तु यस्मिन् रूपे प्रसिद्धं नास्ति,
द्रूपे उल्लेखः। अपरञ्चोपमानोपमेययोः जाति-प्रमाण-लिङ्ग-सङ्ख्याभिन्न

परस्परमनुरूपताया अभावः बिम्ब-प्रतिबिम्बभावापन्नेषु धर्मेषु—उपमानोपमेययो धर्माणां न्यूनाधिकरूपेण संस्थितिः, साधारणधर्मस्य चानुगामिनि सति काल पुरुष-विध्याद्यर्थानामनुपपन्नता। अर्थात्—एवम्भूतायाः क्रियाया अनुगामित यस्य कालपुरुषाद्युपमानोपमेययोरंशे सङ्गतो न भवेत्। एते सर्वे चमत्कारापक र्षकत्वादुपमायाः दोषाः सन्ति।

सम्प्रत्युपमादोषाणां क्रमेणोदाहरणानि यथा; तत्रादौ कविसमयप्रसिद्धि राहित्यस्योदाहरणं यथा—

'प्रफुल्लकह्लारनिभा मुखश्री रदच्छदः कुङ्कुमरम्यरागः।
नितान्तशुद्धा तव तन्वि वाणी विभाति कर्पूरपरम्परेव॥'

अस्मिन् पद्ये दोषो यथा—मुख-कह्लारयोः, केशर-अधरोष्ठयोः, कर्पू वाण्योश्चोपमानोपमेयभावः, कवीनां व्यवहारेऽप्रसिद्धः।

एवमेवोपमानोपमेययोर्जात्याऽननुरूपत्वस्योदाहरणं यथा—

'मुनिः श्ववदयं भाति सततं पर्यटन् महीम्।
विनिवृत्तक्रियाजातः श्वापि लोके शुकायते॥'

अत्रायं दोषः—पूर्वार्धे कुक्कुरेण सह मुनेः, उत्तरार्धे च शुकदेवेन कुक्कुरस्य योपमा प्रदत्ताऽस्ति, सा जात्या नानुरूपा, अर्थात् कुक्कुरस्य जा सहस्रोपायेनापि मुनेः सदृशः न भविष्यति। अन्यच्चोपमानोपमेययोः प्रमा नाननुरूपत्वस्योदाहरणं यथा—

'सरसि प्लवदाभाति जम्बीरं सुपचेलिमम्।
आदिकारणतोयौघ इव ब्रह्माण्डमण्डलम्॥'

अस्मिन् पद्ये—उपमानोपमेययोश्च प्रमाणं नानुरूपमस्ति। क्व स्व जम्बीरं, क्व च महाविशालं ब्रह्माण्डमण्डलम्, एवमेव क्व स्वल्पप्र सरोवरः क्व च समग्रभुवनमात्मसात्कारकः जलसमूहः।

निष्कर्षश्चात्र—प्रस्तुतोक्तपद्ये कतिचित्पदानीतस्ततः कृत्वा यदि ब्रह्मा मण्डलोपमेयं कुर्यात् अर्थात् पद्याकृतिः—

'सरसीव समाभाति जम्बीरं सुपचेलिमम्।
आदिकारणतोयौघे प्लवद् ब्रह्माण्डमण्डलम्॥'

इति कुर्यात् तदाऽपि—अयमेव दोषः स्यात्। अलमत्युदाहरणैरिति।

( ६४ ) प्रश्नः—'नीलाञ्चलेन संवृतमाननमाभाति हरिणनयनायाः ।
प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः ॥'
इति पद्ये समुद्भावितोपमादोषं निराकुरुत। (सं० सं० विश्व० १९७६)

उत्तरम्—प्रस्तुतोऽयं समीक्षात्मकः प्रश्नः पण्डितराजजगन्नाथविरचितस्य रसगङ्गाधरस्य द्वितीयानने उपमादोषनिरूपणप्रसङ्गात् अनुबन्धितोऽस्ति । त्र नानाविधाः शङ्काः उत्पाद्य तासां यथोचितं समाधानमपि ग्रन्थकारेण कृत- ति । तासु शङ्कासु मध्ये इयमप्येका शङ्कोपयुक्ता विद्यते । तद्यथा—ननु—

'नीलाञ्चलेन संवृतमाननमाभाति हरिणनयनायाः ।
प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः ॥'

अत्रोपपादनं यथा—'इत्यत्रोपमाने चन्द्रे योगमर्यादया भासमान एणरूपो- ङ्क आननरूपोपमेयविशेषणस्य बिम्बाभावात् कस्य प्रतिबिम्बः स्यात् । अतः धिक्यापादकतया दोषः । न च हरिणनयनसदृशस्य नयनस्योपादानात्तस्यैव म्बस्य प्रतिबिम्बः स्यादिति वाच्यम् । तादृशनयनस्य बहुव्रीह्यर्थकान्ताविशेष- या आननाविशेषणत्वेन बिम्बत्वाभावादिति चेत्, मैवम्, शब्देनाननविशेषण- न तादृशनयनस्याप्रतिपादनेऽपि कान्ताविशेषणत्वेनैवाननवृत्तित्वस्यापि तपत्तेः । न ह्याननमविषयीकृत्य कान्तां विशेष्टुमीष्टे नयनम्, अनुभवविरो- त् । अत्रायं सारांशः—अस्मिन् उपर्युक्ते पद्ये उपमानस्य चन्द्रस्य बोधः येन ाङ्कपदेन भवति, तत्पदेनैव योगशक्त्योपमानभूते चन्द्रे एण-मृग-रूपचिह्न- पि बोधो भवति, अतस्तेन चिह्नेन युक्तश्चन्द्र एवोपमानस्य सिद्धिर्भविष्यति, ञ्च उपमेयस्य मुखस्य विशेषणरूपे किमप्येतादृग् बिम्बभूतं वस्तु न कथित- स्त, यस्य प्रतिबिम्बत्वेनोक्तमृगरूपं चिह्नं स्वीकुर्यात् । अस्यां दशायाम् मानांशे तत् चिह्नरूपं विशेषणमधिकमस्ति, इत्येव कथनं समुचितम् । अतः पुपमा दोषसहिताऽस्ति ।

समाधानञ्च यथा—उपमेयवाक्ये यत् 'हरिणनयना' पदमागतमस्ति, ार्थो भवति—हरिणस्य नयनमिव नयनमेव बिम्बरूपमस्ति, यस्य प्रति- बमस्ति—उपमानांशे मृग-लाञ्छनन्तु—नैतदुचितम् ।

कारणञ्चात्र—तत् हरिणनयनसमाननयनं बहुव्रीहीसमासे वाच्यायाः कायाः विशेषणमस्ति । उपमेय-मुखस्य नहि, अतस्तद् उपमेयविशेषणा- ात् बिम्बभूतं न । अपर्याप्तमिदं समाधानम् ।

सिद्धान्तभूतं समाधानं यथा—यद्यप्युक्तो 'नयन' शब्दतः मुखस्य विशेषरूपे प्रतिपादितो न भवति। तथापि तन्नयनशब्दः नायिकायाः विशेषणत्वादेव मुखे स्थितमिति ( नयनम् ) ज्ञायते। यतः नयनं वस्तुतः मुखस्य पदार्थः।

तात्पर्यञ्चात्र—नयनं मुखमित्यादि विशेषणरूपेऽनुक्तेऽपि मुखवृत्तित्वेन ज्ञातो भूत्वा मृगाङ्कस्य बिम्ब इति स्वीकर्तुं योग्यः।

---

## वाराणसेय-सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य प्रश्नपत्राणि

### आचार्यपरीक्षायां तृतीयवर्षे, साहित्यविषये प्रथमपत्रम्

[ सर्वे प्रश्नाः समाङ्काः, तत्र पञ्चैव समाधेयाः ]

### १९७५ ई०

१. 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति रसगङ्गाधरवाक्यं श्रीजगन्नाथदिशा परिष्कृत्य पदकृत्यञ्च प्रदर्श्य—पुत्रस्ते जातः, धनं ते दास्यामि इत्यादि वाक्यानां काव्यत्वं निरस्यत ।

२. शान्तस्य नवमरसत्वमाक्षेपसमाधानपूर्वकं व्यवस्थापयत ।

३. रसस्वरूपं तदभिव्यक्त्यनभिव्यक्तिप्रकारश्च प्रदर्शयत ।

४. रसानां विरोधाविरोधौ चिन्तयत ।

५. दशसु शब्दगुणेषु कयोश्चिद् द्वयोर्लक्षणं सपदकृत्यं दर्शयत ।

६. भावलक्षणं भावाभिव्यक्तिप्रकारश्च लिखत ।

७. रसाभासलक्षणं तदुदाहरणञ्च प्रदर्श्य—

'व्यानम्राश्चलिताश्चैव स्फारिताः परमाकुलाः ।
पाण्डुपुत्रेषु पाञ्चाल्याः पतन्ति प्रथमा दृशः ॥'

इत्यत्र किं व्यङ्ग्यमिति व्यवस्थापयत ।

### १९७६ ई०

१. काव्यत्वं शब्दार्थयुगले पर्याप्तं शब्दविशेषे वा नियतमिति विचारयत ।

२. एवञ्च व्यञ्जकानां साधारण्यं प्रतिपादयतां प्रामाणिकानां ग्रन्थैः सह असाधारण्यं प्रतिपादयतस्तव ग्रन्थस्य विरोधः स्फुट इति जगन्नाथवाक्यं प्रसङ्ग-निर्देशपुरस्सरं विशदीकुरुत ।

३. अभिनवगुप्तमम्मटभट्टादिसम्मतं रसस्वरूपमुपपाद्य जगन्नाथसम्मतं रस-स्वरूपं दर्शयत ।

४. वागर्थाविव सम्पृक्तावित्यत्र न रसध्वनिरिति जगन्नाथपक्षं दीक्षितपक्षं प्रतिक्षिप्य समर्थयत ।

५. माधुर्यौजःप्रसादानां त्रयाणां गुणानां रसमात्रधर्मत्वं जगन्नाथदर्शितदिशा साधयत ।

६. व्यभिचारिभावानां केषाञ्चित् पञ्चानां लक्षणोदाहरणे वर्णयत ।

७. आलम्बनभेदेन स्थायिभावानां रसाभासत्वमुपपाद्य कस्यचिदेकस्योदाहरणं प्रदर्श्य व्याख्यायत ।

## १९८७ ई०

१. स्मृतापीति मङ्गलपद्ये सम्भावितामलङ्कारााणां स्थितिं प्रदर्श्य त्रिकस्य प्राधान्यमिति प्रदर्श्यताम् ।

२. शब्दविशेषस्यैव काव्यत्वं शब्दार्थयुगलस्य वेति वैमत्ये भवदभिमतं काव्यपदार्थत्वं साध्यताम् ।

३. भट्टनायकदिशा रसस्वरूपं निरूप्यताम् ।

४. 'न कपोतमण्वपि' इति पद्यस्य न कपोतकपोतक तवेति पाठान्तरकल्पने किं बीजमिति प्रदर्श्य कस्य ध्वनेरुदाहरणमिदमिति समर्थ्यताम् ।

५. 'चित्रं महानेष बतावतारः' इत्यत्र कस्य ध्वनेः प्राधान्यमिति समालोच्यताम् ।

६. किं नाम भावत्वमिति विशदं विविच्यताम् ।

७. भावशबलत्वलक्षणमुपन्यस्य तेषूपमर्दोपमर्दकभावः समुचितो न वेति प्रकाश्यताम् ।

८. तृतीयकाव्यस्य लक्षणं व्याख्याय समुचितोदाहरणे सङ्गमयन्तु ।

९. निश्शेषच्युतेति पद्येऽप्पयदीक्षितसरणिं निरस्य पण्डितराजाभिमतं प्रकाशयन्तु ।

१०. पण्डितराजदिशा काव्यलक्षणं परिष्कृत्य कस्मिंश्चिदुदाहरणे सङ्घटयन्तु ।

११. पण्डितराजेन कति रससिद्धान्ताः प्रकाशिताः ? तेषां सारं सङ्क्षेपतः प्रस्तुवन्तु ।

१२. 'शयिता सविधेऽप्यनीश्वरा' इत्यादिपद्यं व्याख्याय अत्र रतेः प्राधान्यं त्रपादावेत्यत्र ग्रन्थकृन्मतं समालोचयन्तु ।

## १९८९ ई०

१. रसगङ्गाधरस्य मङ्गलपद्येऽलङ्काराणां साङ्कर्यं प्रदर्श्य पार्यन्तिकं व्यङ्ग्यं प्रकटयत ।

२. काव्यलक्षणे रमणीयता-पदार्थं परिष्कृत्य तत्र जनकत्वमुत्पादकत्वमन्यद्वेति निर्णयत ।

३. काव्यलक्षणस्य परिष्कारत्रये पूर्वपूर्वस्मिन्नरुचिं प्रदर्श्योत्तरस्य निर्दुष्टत्वं स्थापयत ।

४. पण्डितराजमतं रसस्वरूपं निरूपयत ।

५. रसविषये जगन्नाथभट्टनायकयोः वैमत्यं प्रदर्श्य कतरस्य साधुत्वं दर्शयत ।

६. किं नाम भावत्वमिति स्फुटीकृत्य चिन्ताधृत्योर्लक्षणे उदाहरणे चोल्लिखत ।

७. विरोधिरसान् निरूप्यैतेषां समावेशप्रकारं निर्दिशत ।

८. भावशान्त्यादिषु शान्त्यादेर्भावस्यता प्राधान्यमित्युपपादयत ।

१९९० ई०

१. रसगङ्गाधरस्य 'स्मृताऽपि' इति मङ्गलपद्ये भावस्य अलङ्काराणां वा प्राधान्यमिति विचारयत ।

२. काव्यलक्षणप्रसङ्गे पण्डितराजोक्तदिशा मम्मटलक्षणे दोषानुद्भावयत ।

३. निःशेषच्युतचन्दनमित्यत्र अप्पयदीक्षितमतं निरस्य ग्रन्थकृदाशयं दृढ़यत ।

४. भग्नावरणचिद्विशिष्टो रत्यादिरेव रसः इत्युक्तेराशयं प्रकाशयत ।

५. रसविषयकं ज्ञानं भ्रमरूपमिति पक्षं स्पष्टयत ।

६. वीरः कतिविधः, पाण्डित्यवीरस्वीकारे का वाचो युक्तिरिति प्रतिपादयत ।

७. भावसन्धि-भावशबलतयोरेकतरं सोदाहरणं विवृणुत ।

---

## आचार्यपरीक्षायां तृतीयवर्षे, साहित्यविषये द्वितीयपत्रम्

सम्पूर्णाङ्काः—५०

[ यथेच्छं प्रश्नपञ्चकमेव समाधेयम्, सर्वे समाङ्काः ]

१९७५ ई०

१. नानार्थशब्दविषये 'तत्र केचिदाहुः' 'अपरे त्वाहुः' इति मतद्वयं साधु प्रतिपाद्योभयोर्यद्वैलक्षण्यं तद्विशदयत ।

२. 'सौधानां नगरस्यास्य मिलन्त्यर्केण मौलयः' इत्यादौ 'वाच्यार्थबाधितार्थबोधस्योपपत्तिः स्यात्' इति सन्दर्भस्याशयमुपवर्ण्य 'अनुसरणीयेन यत्नेन' इत्यभिदधता जगन्नाथेन कुत्रैतादृशो यत्नः कृतः ? कीदृशश्च सः ? इति निरूपयत ।

३. 'तदप्राप्तिमहादुःखविलीनाशेषपातका' इत्यादावतिशयोक्तेरर्थापत्ति-विषयत्वं गुणीभूतव्यङ्ग्यत्वं वा जगन्नाथः कथमुपपादयतीति निरूपयत ।

४. जगन्नाथाभिमतं लक्षणालक्षणं परिष्कृत्य लक्षणाविभागान् सोदाहरण-निर्देशं प्रदर्शयत ।

५. उपमालक्षणमुल्लिख्य लक्षणान्तर्गतानां पदानां व्यावर्त्यं प्रदर्शयत ।

६. 'यच्चाप्पयदीक्षितैः लुप्तायां नैवं भेदाः, तस्यां साधारणधर्मस्यानुगामिता नियमात् इत्युक्तम्, तन्न' इत्यत्र दीक्षिताशयं प्रतिपाद्य तत्र जगन्नाथः कं दोषं पश्यतीति विशदयत ।

७. अलङ्कारस्यालङ्कारान्तरोपस्कारकत्वं कथमिति निरूपयत ।

## १९७६ ई०

१. नानार्थस्याप्राकरणिकेऽर्थे व्यञ्जनेति प्राचां सिद्धान्तः, तस्य निरसने पण्डितराजप्रदर्शिता द्वित्रा युक्तयो निर्देष्टव्याः ।

२. प्राचीनाभिमतं विरोधितोदाहरणं निराकुर्वतोऽप्पयदीक्षितस्य मतं पण्डितराजरीत्या निराकुरुत ।

३. शब्दशक्तिमूलाऽलङ्कारध्वनेरुदाहरणे 'करतलनिर्गलत्' इत्यादि पद्ये कोऽलङ्कारध्वनिरिति ग्रन्थदिशा निर्दिशत ।

४. गौणसारोपलक्षणोदाहरणे मुखं चन्द्र इति रूपके चन्द्रपदस्य चन्द्रसदृशे लक्षणेति प्राचां सिद्धान्तस्तर्हि चन्द्रसदृशं मुखमित्युपमातो मुखं चन्द्र इति रूपकस्य भेदसाधिकां युक्तिमभिदधत ।

५. अप्पयदीक्षितोक्तमुपमालक्षणं पण्डितराजरीत्या समीक्ष्य स्वमतं प्रदर्शयत ।

६. 'यथा लतायाः स्तबकानतायाः' इत्यादि पद्ये सयुक्तिमुपमाभेदं विवेचयत ।

अरविन्दमिव सुन्दरमिति वाक्यस्य शङ्कासमाधानपुरस्सरं शाब्दबोधं निरूपयत ।

८. 'नीलाञ्चलेन संवृतमाननमाभाति हरिणनयनायाः ।
प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः ॥'

इति पद्ये समुद्भावितोपमादोषं निराकुरुत ।

## १९८७ ई०

१. अर्थशक्तिव्यङ्ग्यमूलस्य ध्वनेर्ग्रन्थकारदृशा दशप्रकारत्वं समर्थयत।

२. नानार्थस्थले प्रकरणादीनामेकार्थनियामकत्वमङ्गीकर्त्तव्यं न वेत्यालोचयत।

अर्थप्रकरणलिङ्गेषु कयोश्चिद् द्वयोः स्वरूपमुपवर्णयत।

'बधान द्रागेव द्रढिमरमणीयं परिकरम्' इत्यत्र कतमो ध्वनेर्भेद इत्युपपादयत।

५. 'मुखचन्द्र' इत्यत्र प्राचीनाभिमतं लक्षणाप्रकारं तत्प्रयोजनञ्च लिखत।

६. उपमालङ्कारलक्षणं सपदकृत्यं व्याख्याय तदुदाहरणे सङ्गमयत।

७. व्यङ्ग्यवस्तूपस्कारिकां व्यङ्ग्यालङ्कारोपस्कारिकां वा उपमाम् उदाहृत्य उपस्कारशब्दार्थं साधु प्रपञ्चयत।

८. 'केवलशब्दात्मकधर्मस्य उपमालङ्कारनिर्वाहकत्वं सम्भवति न वेत्युदाहरणद्वारा निर्णयत।

९. 'अरविन्दमिव सुन्दरमि'त्यत्र शाब्दबोधसरणिं प्रकटीकुरुत।

१०. उपमादोषाः कीदृशा इति दिग्दर्शनेन तत्परिचयमुपरचयत।

११. पण्डितराजस्य अलङ्कारनिरूपणे किमपि वैशिष्ट्यं लिखत।

१२. अलङ्कारस्य अलङ्कारान्तरोपस्कार्यत्वं कथं भवतीत्युदाहरणद्वारा प्रमाणयत।

## १९८८ ई०

१. नानार्थस्थले एकार्थमात्रविषया पदार्थोपस्थितिः तदन्वयबोधे अपेक्ष्यते। किमिदं समीचीनम्?

२. 'लिङ्गं नानार्थपदशक्यान्तरावृत्तिरेकशक्यगतः साक्षात् शब्दवेद्यो धर्मः'। व्याख्यायतामयं भागः।

३. शब्दशक्तिमूलमलङ्कार-ध्वनिमुदाहृत्य समासोक्तितस्तद्वैलक्षण्यं विचार्यताम्।

४. 'शनिरशनिश्च तमुच्चैः' इत्याद्युदाहरणे को दोषः? इति ग्रन्थदृशा निर्णीयताम्।

५. 'भेदकरम्बितं सादृश्यमुपमाजीवातुभूतम्, भेदकरम्बितञ्च गौणसारोपलक्षणाया' इति स्फुटभेदे कृतं फलकृतवैलक्षण्यपर्यन्तानुधावनेन पङ्क्तिरेषा व्याख्यायताम्।

६. 'साधर्म्यमुपमाभेदे' इति प्रकाशोक्तलक्षणस्य खण्डनप्रकारम् उपवर्ण्यताम् ।

७. व्यङ्ग्यवस्तूपकारिकाया रसोपस्कारिकाया वा उपमाया उदाहरणमुखेन स्वरूपमाविष्क्रियताम् ।

८. क्वचिदुदाहरणे बिम्बप्रतिबिम्बभावं वस्तु-प्रतिवस्तुभावं वा सम्यङ् निर्दिश्य तदुपयोगः प्रसाध्यताम् ।

९. उपमायाः रशनोपमा-मालोपमादिभेदेष्वन्यतममुपपाद्य तच्चमत्कारमूलमन्विष्यताम् ।

१०. 'अरविन्दमिव सुन्दरम्' इत्यत्र शाब्दबोधसरणिः प्रसार्यताम् ।

---

३५ निरुक्त-रहस्यम् । डॉ० शिवप्रसाद द्विवेदी १५-००
३६ नैषधीयचरित-रहस्यम् । डॉ० रमाशंकर मिश्र । १-५ सर्ग २५-००
३७ नैषधीयचरित- । डॉ० शिवप्रसाद द्विवेदी । १०-१३ सर्ग ३०-००
८ न्यायसिद्धान्तमुक्तावली-शब्दखण्ड । डॉ० अशोकचन्द्र गौड़ शास्त्री ५-००
३९ परमलघुमञ्जूषा-सोपानम् । डॉ० शिवप्रसाद द्विवेदी १५-००
४० परिभाषेन्दुशेखर-सोपानम् । डॉ० शिवप्रसाद द्विवेदी १५-००
१ पाणिनीयशिक्षा-सोपानम् । डॉ० बालगोविन्द झा ५-००
२ प्रतापविजय-दीपिका । डॉ० शिवप्रसाद द्विवेदी १०-००
३ प्रतिमानाटक-रहस्यम् । डॉ० रमाशंकर त्रिपाठी २०-००
४ प्रबन्धसङ्ग्रहः । व्याकरणाचार्य निबन्ध । डॉ० ब्रह्मानन्द त्रिपाठी १०-००
प्रसन्नराघवन-सोपानम् । डॉ० शिवप्रसाद द्विवेदी १०-००
भट्टिकाव्य-दर्पणः । स्वामी प्रज्ञान भिक्षु । १-४ सर्ग १५-००, ५-८ सर्ग १५-००
यालोकः । डॉ० रमाशङ्कर मिश्र । १४-१७ सर्ग १५-००, १८-२२ सर्ग १५-००
-सोपानम् । आचार्य शिवप्रसाद द्विवेदी १२-५०
भूषणसार-दीपिका । ( वैयाकरण-भूषणसार प्रश्नोत्तरी ) रामकिशोर त्रिपाठी १५-००
० मध्यसिद्धान्तकौमुदी-चन्द्रिका । आचार्य विजयमित्रशास्त्री सम्पूर्ण ६०-००
प्रथम खण्ड २५-००, द्वितीय २०-००, तृतीय २०-००, चतुर्थ १५-००
१ मनोरमा-रत्नविमर्शः । केशवदेव तिवारी । प्रथम भाग ७-५०, द्वितीय भाग १५-००
महाकविकालिदासः । ( विशिष्टाध्ययनम् ) । डॉ० शिवप्रसाद द्विवेदी २५-००
महाभाष्यम्नवाह्निकीयालोचनम् ( नवाह्निक प्रश्नोत्तरी ) । विजयमित्र शास्त्री २५-००
४ मालविकाग्निमित्र-रहस्यम् । बालगोविन्द झा १५-००
मीमांसापरिभाषा सोपानम् । डॉ० शिवप्रसाद द्विवेदी ७-५०
मुक्तावली-प्रकाशः ।(न्यायसिद्धान्तमुक्तावली-प्रश्नो०) ।राजेन्द्रप्रसाद कोठ्यारी २०-००
मदाराक्षस-विवेकः । लोकमणि दाहाल २५-००
मृच्छकटिक-सोपानम् । डॉ० नरेश झा २०-००
८ मेघदूत-तत्त्वालोकः । अशोकचन्द्र गौड़ शास्त्री १५-००
९ यतीन्द्रमतदीपिका-सोपानम् । आचार्य शिवप्रसाद द्विवेदी ५-००
० रघुवंश-रहस्यम् । रामप्रसाद त्रिपाठी । १-३ १२-५० ६-७ १२-५०, १३-१४ १२-५०
१ नाटका सोपानम् । डॉ० शिवप्रसाद द्विवेदी १५-००
गङ्गाधर-सारः । डॉ० नरेश झा २०-००
४ रसगंगाधर-हृदयम् । ज्ञानचन्द्र त्यागी ३०-००
५ रामविलाप-काव्यसोपानम् । डॉ० शिवप्रसाद द्विवेदी १५-००
६ लघुमञ्जूषा-रहस्यम् । स्वामी रामेश्वर पुरी १५-००
७ लघुशब्देन्दुशेखर-सोपानम् । डॉ० शिवप्रसाद द्विवेदी २५-००
८ लघुसिद्धान्तकौमुदी-चन्द्रिका । आचार्य विजयमित्र शास्त्री ४०-००
९ वक्रोक्तिजीवित-दीपिका । डॉ० नरेश झा १२-५०
० वाक्यपदीय-प्रकाशिका । ( ब्रह्मकाण्ड ) । डॉ० सुरेशचन्द्र शर्मा १५-००
१ वासवदत्ता-रहस्यम् । डॉ० शिवप्रसाद द्विवेदी १-००

